॥ श्रीः ॥


हरिदास-संस्कृत-ग्रन्थमाला



१८१


काशीस्थ राजकीय - संस्कृतप्रथमापरीक्षानिर्धारितं

महाभारतोद्योगपर्वणः १३३-१३६ अध्यायात्मकं

# विदुलोपाख्यानम्

सान्वय-'लीला'-'विलास'-विलसितम् ।

Sanskrit Story of Vidula (From Mahabharata)




व्याख्याकारः—

पं० जगन्नाथशास्त्रीहोशिङ्गः

साहित्याचार्यः

व्याकरणाचार्य पण्डित गोपालशास्त्री नेने कृत

परीक्षोपयोगी—रूपलेखनप्रकार—पङ्क्तिलेखनप्रकार आदि

विविध परिशिष्ट विषयों से विभूषित—

# सिद्धान्तकौमुदी—बालमनोरमा

इस संस्करण में—सिद्धान्तकौमुदी के जिन २ विषयों की व्याख्या बालमनोरमा टीका में स्पष्टतया प्रतिपादन किया है उन्हीं विषयों को तत्त्वबोधिनी आदि टीकाओं में पिष्ट-पेषण मात्र किया है। इसलिये हमारे योग्य विद्वान् सम्पादक ने अन्य सभी टीकाओं की समालोचना कर जो कुछ अंश जटिल एवं प्राच्य-नव्य मत से विवादग्रस्त परीक्षो-पयोगी अवशिष्ट थे ग्रन्थ के अन्त में प्रयोगसाधन-पंक्तिप्रकाशनशैली के रूप में दिखा दिये हैं जिससे "एक पन्थ दो काज" अर्थात् परीक्षा के लेखनशैली का ज्ञान भी विद्यार्थी जान जांयगे और केवल कण्ठस्थ करने पर परीक्षा-महार्णव को भी अनायास से पार करेंगे तथा व्यर्थ अन्य अन्य टीकाओं के कष्ट से इस विकट परिस्थिति में अर्थ भार से बच जांयगे। द्वितीय संस्करण। मूल्य कारकान्त प्रथम भाग ४) समासादि द्विरुक्तान्त द्वि० भाग ४) भ्वाद्यादि चुराद्यन्त तृ० भाग ३) ण्यन्तादि समाप्त्यन्त च० भाग ५) पूर्वार्द्ध ८) उत्तरार्द्ध ८) सम्पूर्ण १६)

## सिद्धान्तकौमुदी जेबी-गुटका

### सूत्रसूची—धातुसूची—सूत्रांक—वार्तिकांक सहित

सिद्धान्तकौमुदीका ऐसा सुन्दर जेबी गुटका का मनोहर संस्करण यह प्रथम बार ही छपा है। प्रति दिन सिद्धान्त कौमुदी की आवृत्ति करना विद्यार्थियोंके लिये आवश्यक है। सुबह-शाम घूमते-फिरते समय तथा परदेश-यात्रा करते समय विद्यार्थियोंका बहुत ही समय व्यर्थमें व्यतीत होजाता है। अब जहाँ कहीं जाना हो इस संस्करण को जेब में रख लीजिये और जब चाहें सिद्धान्तकौमुदी की आवृत्ति किजीये। ३)

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।

THE

HARIDAS SANSKRIT SERIES

181

13211

THE

# VIDULOPĀKHYĀNA

*A Selection from the Udyogaparva of Mahābhārata*

*Chapters 133-136*

OF

**S'RI VEDAVYĀSA**

महाभारतोद्योगपर्वणः १३३-१३६ अध्यायात्मकं

# विदुलोपाख्यानम्

साहित्याचार्येण होशिङ्गोपनाम्ना श्रीजगन्नाथशास्त्रिणा
'लीला'-'विलासा'ख्य-संस्कृतव्याख्या-हिन्दीभाषानुवादाभ्यां
भूमिकया च संयोज्य सम्पादितम् ।




प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

द्वि० संस्करणम् ] मूल्य ।॥) [ वि० सं० २००४

[ अस्य ग्रन्थस्य सर्वेऽधिकाराः प्रकाशकाधीनाः ]

# भूमिका

काशी विद्या-विलास प्रेस के अध्यक्ष बाबू श्रीजयकृष्णदासजी के कनिष्ठ भ्राता श्रीकृष्णदासजी ने मुझसे महाभारतीय विदुलोपाख्यान की संस्कृत टीका तथा हिन्दी भाषानुवाद करने को कहा। यह अंश गवर्नमेंट संस्कृत कालिज, बनारस की प्रथमा परीक्षा के सन् १९४८ ईस्वी के पाठ्य-ग्रन्थ में समाविष्ट हुआ है। बालकों को उत्साहित तथा उत्तेजित करने का यह उपयुक्त साधन है।

वर्तमान नियमावली के अनुसार "चित्रशाला प्रेस, पूना" में मुद्रित श्रीमहाभारत—उद्योगपर्व अध्याय १३३ से १३६ तक ४ अध्याय विदुलोपाख्यान नामक मूल ही ग्राह्य ठहराया गया है। उसी आदर्श पुस्तक को आधार मान कर तदनुसार यह पुस्तक तैयार की गई है। १३३ से १३६ तक चार अध्याय होते हैं और उतने ही में विदुलोपाख्यान पूर्ण होता है। इसलिये यहां महाभारतीय अध्याय संख्या न देकर क्रमशः १,२,३,४ अध्याय मान कर वैसा ही उल्लेख किया है। इसमें कुछ लोगों को भ्रम होने की सम्भावना समझ कर स्पष्ट कर देना पड़ा है।

छपाई के कार्य में अर्थात् प्रूफ देखने में श्री रामचन्द्र शास्त्री पणशीकर जी ने अच्छा सहयोग दिया, इसलिये उन्हें अनेकानेक धन्यवाद।

प्रस्तुत-पुस्तक से परीक्षार्थी छात्रों को यदि कुछ भी सहायता प्राप्त हुई और यह सटीक पुस्तक अध्यापकों को पसंद आई तो सम्पादक तथा प्रकाशक अपने आपको कृतार्थ मान लेंगे। अलमधिकेन, शुभम्।

वाराणसी नगरी,
गुरु-पूर्णिमा सं० २००४.

टीकाकार तथा सम्पादक—
श्री जगन्नाथ शास्त्री होशिङ्ग

132॥

॥ श्रीः ॥

श्रीमहाभारतीयं

# विदुलोपाख्यानम् ।

## सटीकम् .



### प्रथमोऽध्यायः ।

**कुन्त्युवाच—**

**अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**विदुलायाश्च संवादं पुत्रस्य च परन्तप ॥ १ ॥**

**अज्ञानान्धन्तमोदूरीकरणोद्यद्दिवाकरान् ।**
**ज्ञानालोकप्रदान् वन्दे गुरुगीर्गणनाथकान् ॥ १ ॥**
**काशीस्थराजकीयामरगीर्विद्यासदःपरीक्षासु ।**
**विदुलासुतानुशासनमधुना व्याख्यायतेऽत्र निर्दिष्टम् ॥ २ ॥**

अथ भगवान् महामुनिर्व्यासो महाभारताख्यं ग्रन्थं विनिर्माय संसारिणामुपकारायाऽयतत । तत्र च क्रमेण कथाप्रसंगे विदुला-सञ्जय-संवादात्मकमेकं पुरातनमितिहासं प्रदर्शयन्ती "सर्वैरेव विहाय क्लैव्यं शौर्यमेवार्जनीय"मिति प्रत्यपादयत् कृष्णं प्रति पाण्डुपत्नी कुन्ती । तदिदमुपाख्यानमारभमाणो वेदव्यासः कथयति-कुन्तीति ।

कुन्ती = युधिष्ठिरादीनां जननी, उवाच = कथयामास ।

**अन्वयः—**हे परन्तप ! ( वृद्धाः ) अत्रापि विदुलायाः च पुत्रस्य च संवादम् इमं पुरातनम् इतिहासम् उदाहरन्ति ।

**अर्थः—**अत्रेति । हे परन्तप ! परान् = शत्रून् तापयति = उद्वेजयतीति तत्सम्बुद्धौ=हे शत्रुसूदन ? 'द्विषत्परयोस्तापे' रिति खचि, 'खचि ह्रस्व' इति ह्रस्वे च 'अरुर्द्विषदजन्तस्ये'ति मुमागमः, वृद्धाः=मान्या जनाः, अत्रापि=अस्मिन्नपि विषये, विदुलायाः =तन्नाम्न्याः क्षत्रियराज्ञ्याः, अपि च, पुत्रस्य च=तनयस्यापि 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः, संवादं =मिथो भाषणरूपं 'संवादो भाषणं मिथः' इत्यमरः, इमं = वक्ष्यमाणं, पुरातनं = प्राचीनम् , इतिहासं = पुरावृत्तम्,

'इतिहासः पुरावृत्त'मित्यमरः, उदाहरन्ति दृष्टान्तरूपेण समुपस्थाप्य कथयन्तीत्यर्थः ॥१॥

विघ्न-विदारण-हेतु, गणनायक को स्मरण करि।
करहुँ सदाशय सेतु, विदुला-सुत-वागुदधि महँ ॥

बिलास—कुन्ती पाण्डवों की माता प्रसङ्ग वश सन्देश सुनाती हुई श्रीकृष्णजी से बोलीं—

हे शत्रुसूदन ! कृष्ण ! बड़े लोग इस विषय में भी विदुला तथा तत्पुत्र सञ्जय के संवादरूप इस प्राचीन इतिहास को उदाहरण के रूप में देते चले आ रहे हैं॥ १ ॥

**ततः श्रेयश्च भूयश्च यथावद्वक्तुमर्हसि ।**

**अन्वयः**—ततः भूयश्च श्रेयश्च (भविष्यति, अतः त्वं) यथावत् वक्तुम् अर्हसि।

**अर्थः**—कल्याणजनकमिममितिहासमवश्यं युधिष्ठिरादीन् श्रावयेति पद्यार्धेन दर्शयति—तत इति । ततः=मदुक्तादस्मादितिहासात्, भूयश्च =अधिकतरं, श्रेयश्च=कल्याणमेव, एवार्थेऽत्र चकारः, भविष्यतीत्यध्याहार्यम्, अतः त्वं, यथावत्= पूर्णरूपेण, वक्तुं=भाषितुम्, अर्हसि=योग्योऽसि, कथनमुचितमेवेत्याशयः ॥

बिलास—इससे अत्यन्त कल्याण ही होगा, अतः तुम युधिष्ठिरादि के संमुख पूर्णरूप से कहना ॥

**यशस्विनी मन्युमती कुले जाता विभावरी ॥ २ ॥**
**क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी ।**
**विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३ ॥**

**अन्वयः**—कुले जाता यशस्विनी मन्युमती विभावर क्षत्रधर्मरता दान्ता दीर्घदर्शिनी बहुश्रुता श्रुतवाक्या राजसंसत्सु विश्रुता विदुला ( आसीत् )।

**अर्थः**—कथामारभमाणा कुन्ती सार्द्धकद्वयेन विदुलां परिचाययति—यशस्विनीति । कुले=सद्वंशे, जाता=उत्पन्ना, यशस्विनी प्रशस्तं यशो यस्याः सा यशस्विनी प्रशस्तयशोयुक्ता 'अस्मायामेधास्रजो विनि'रिति विनिः, मन्युमती = दैन्ययुक्ता 'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरः, विभावरी =कुटिलस्वभावा 'विभावरी निशा-रात्र्योः कुट्टन्यां वक्रयोषिति' इति मेदिनी. क्षत्रधर्मरता = क्षत्राणां = क्षत्रियाणां, धर्मे=पराक्रमरूपे कर्तव्ये, रता=तत्परा क्षत्रियोचितधर्माभिमानिनी, दान्ता=वशीकृतेन्द्रिया, दीर्घदशिनी=दूरदर्शिनी 'दूरदर्शी दीर्घदर्शी'त्यमरः, बहुश्रुता=बह्वधीतिनी, श्रुतवाक्या श्रुतं=शास्त्रसंमतं, वाक्यं=वचनं यस्याः सा शास्त्रानुकूलभाषणकर्त्री, राजसंसत्सु राज्ञां=नृपाणां, संसदः=सभाः तासु, 'सभासमितिसंसद' इत्यमरः, विश्रुता= प्रसिद्धिं प्राप्ता, विदुला=तन्नाम्नी क्षत्रियकन्या, आसीत्=पुरात्र निवसति स्म ॥ ३ ॥

बिलास—अच्छे कुल में उत्पन्न, प्रसिद्ध यशवाली, दीनता से पूर्ण, कुटिल

स्वभाववाली, क्षत्रियोचित धर्म पालनेवाली, दमन करनेवाली, दूरतक का सोच विचार करनेवाली, बहुत पढी लिखी, विदुषी, राज-सभाओं मे प्रसिद्ध एक विदुला नामक राजकुमारी थी ॥ ३ ॥

**विदुला नाम राजन्या जगर्हे पुत्रमौरसम्।**
**निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ४ ॥**

**अन्वयः**—विदुला नाम ( सा ) राजन्या सिन्धुराजेन निर्जितं दीनचेतसं शयानम् औरसं पुत्रं जगर्हे ।

**अर्थः**—विदुलाकर्तव्यं निर्दिशति—विदुलेति। विदुला नाम=विदुलानाम्ना प्रसिद्धा, सा=पूर्वोक्ता, राजन्या =मूर्द्धाभिषिक्ता 'मूर्द्धाभिषिक्तो राजन्य' इत्यमरः, सिन्धुराजेन सिन्धूनां=सिन्धुदेशानां, राजा = अधिपतिः तेन 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः, निर्जितं =पराजितम् , अतः, दीनचेतसं = खिन्नमनस्कम् , तत्कारणादेव शयानं =भूमौ लुठन्तम् , औरसं = स्वोदरोत्पन्नं, पुत्रं =सुतं, जगर्हे = निन्दितवती ॥ ४ ॥

विलास—**विदुला नामक उस राज्याभिषिक्त क्षत्रिय राजा की कन्या ने सिन्धुराज से पराजित, दुखी, लेटे हुए अपने औरस पुत्र की बहुत ही निन्दा की ॥ ४ ॥**

**विदुलोवाच—**

विदुला = सञ्जयमाता, उवाच =बभाषे ।

**अनन्दन मया जात द्विषतां हर्षवर्धन।**
**न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ ५ ॥**

**अन्वयः**—द्विषतां हर्षवर्धन, मया जात, अनन्दन ! त्वं न मया नच पित्रा जातः हि, क्व आगतः असि ।

**अर्थः**—विदुलोक्तिं दर्शयति-अनन्दनेति। द्विषतां=रिपूणां 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः, हर्षवर्धन = आनन्दोत्पादक, मया = मत्तः, जातः = उत्पन्न, हे आनन्दन =नन्दयतीति नन्दनः =पुत्रः, कुत्सितश्चासौ नन्दनश्चेति अनन्दनः अत्र कुत्सार्थे नञ्समासः, तत्सम्बुद्धौ =हे कुपुत्र ! त्वं =भवान् , न= नैव, मया =मत्तः मदुदरादित्यर्थः, नच=नापिच, पित्रा=पितुः वीर्यात् , जातः = उत्पन्नोऽभवः, हि = निश्चयेन, क्व = कस्मात् स्थानात्कुलाद्वा पञ्चम्यर्थेऽत्र सप्तमी, अथवा क्व =कस्मिंस्तवागमनायोग्येऽस्मत्कुले, आगतः असि =सम्प्राप्तोऽसि ॥५॥

**विदुला ने कहा -**

विलास—**शत्रुओं का हर्ष बढानेवाले मुझसे उत्पन्न ऐ कपूत ! तुम अपने पिता से मेरी कोख से जन्मे नहीं हो, यहां कहां से आगये हो ॥ ६ ॥**

**निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।**
**यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ६ ॥**

**अन्वयः**—क्लीबसाधनः पुरुषः क्रोधहीनश्च असंख्येयः अपि ( त्वं ) यावज्जीवं निराशः असि, कल्याणाय धुरं वह ।

**अर्थः**—निर्मन्युरिति । क्लीबसाधनः क्लीबानि=नपुंसकवत् कार्याक्षमत्वात् शूरतारहितानि, साधनानि=बाह्वादीन्युपकरणानि यस्यासौ, पुरुषः=पुमान्, निर्मन्युश्च=क्रोधविहीनश्चेत्तर्हि, असंख्येयोऽपि=तुच्छत्वाद्वीरेषु अगणनीय एव, स्वार्थेऽप्यपीति पदम्, त्वं च, यावज्जीवं=सम्पूर्णजीवनपर्यन्तम्, निराशः असि=बलोत्साहाभावेन भूयोऽपि राज्यप्राप्तौ आशाविहीन एव जातोऽसि, अथ कल्याणाय=मङ्गलं साधयितुं मनोरथश्चेत्तर्हि, धुरं=युद्धविजयप्राप्तीच्छारूपं भारं, वह=धारय, कल्याणार्थी युद्धाय सन्नद्धो भवेत्यर्थः ॥ ६ ॥

विलास—नपुंसकों की भाँति शूरताहीन बाहु आदि आकारवाला पुरुष क्रोधहीन होने से वीरों की गणना के योग्य नहीं, तुम तो जीवन भरके लिए निराश भी हुए हो, यदि अपनी भलाई चाहते हो तो फिर से युद्ध का भार उठाओ ॥ ६ ॥

**मात्मानमवमन्यस्व मैनमल्पेन बीभरः ।**
**मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ७ ॥**

**अन्वयः**—त्वम् आत्मानं मा अवमन्यस्व, एनम् अल्पेन मा बीभरः, मा भैः, मनः सुकल्याणं कृत्वा ( भयं ) प्रतिसंहर ।

**अर्थः**—मेति । त्वं=भवान्, आत्मनं=स्वं, मा अवमन्यस्व=अपमानितं मा कुरु, एनम्=आत्मानम्, अल्पेन=स्वल्पपदार्थेन, मा बीभरः=न पालय, मा भैः=न भयं प्रतिपद्यस्व, उभयत्र 'न माङ्योगे' इति सूत्रेणाडागमनिषेधः, मनः=मानसं, 'स्वान्तं हृन्मानसं मन' इत्यमरः, सुकल्याणं=कल्याणयुक्तं स्थिरं दृढं चेत्यर्थः, कृत्वा=विधाय, भयं=भीति 'भीतिर्भीः साध्वसं भय'मित्यमरः, प्रतिसंहर=नाशय ॥ ७ ॥

विलास—अपने आपको अर्थात् अपनी आत्मा को अपमानित न करो, थोड़ी वस्तु से इसको मत पालो, तुम न डरो, मन का अच्छा अर्थात् स्थिर और दृढ करके भय का नाश कर दो अर्थात् भय को भगा दो ॥ ७ ॥

**उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।**
**अमित्रान्नन्दयन् सर्वान्निर्मानो बन्धुशोकदः ॥ ८ ॥**

**अन्वयः**—हे कापुरुष! उत्तिष्ठ, सर्वान् अमित्रान् नन्दयन् निर्मानः बन्धुशोकदः ( त्वं ) पराजितः ( सन् ) एवं मा शेष्व ।

**अर्थः**—उत्तिष्ठेति । हे कापुरुष !=कुत्सितश्चासौ पुरुषश्च कापुरुषः तत्सम्बुद्धौ हे भीरो ! उत्तिष्ठ=न स्वपिहि, आलस्यं त्यक्त्वा शौर्याय समुद्यतो भवेत्यर्थः, सर्वान्=सम्पूर्णान् , अमित्रान्=शत्रून् , 'द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रव' इत्यमरः, नन्दयन्=हर्षयन् , निर्मानः=क्षत्रियत्वाभिमानशून्यः, बन्धुशोकदः=बन्धुभ्यः=बान्धवेभ्यः, शोकं=दुःखं ददातीत्येवम्भूतः, त्वं=भवान् , पराजितः=शत्रुभ्यः पराभूतः सन् , एवम्=इत्थं, मा शेष्व=न स्वपिहि, भूमौ शयान इव मा पतंस्तिष्ठेत्यर्थः ॥ ८ ॥

विलास—हे कायर ! उठो, अपने सब शत्रुओं को आनन्दित करते हुए बन्धु-बान्धवों को दुखी या शोकग्रस्त करते हुए सम्मानरहित तुम होकर इस प्रकार न सोओ अर्थात् उद्योगरहित न हो जाओ ॥ ८ ॥

**सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।**
**सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ९ ॥**

**अन्वयः**—कुनदिका स्वल्पकेन एव सुपूरा वै ( भवति ), मूषिकाञ्जलिः स्वल्पकेनैव सुपूरः ( भवति ), सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ।

**अर्थः**—अल्पसन्तोषिणो दर्शयति-सुपूरेति । कुनदिका=कुत्सिता चासौ नदी चेति कुनदी सैव कुनदिका, कुत्सिता=क्षुद्रा चासौ नदी=सरित् , सैव कुनदिका स्वार्थे कन् , ततः 'केऽणः' इति ह्रस्वत्वम् , स्वल्पकेन एव=अल्पजलेनैव, सुपूरा=परिपूर्णा, वै=निश्चयेन, भवति, मूषिकाञ्जलिः=मूषिकाणाम्=उन्दुरूणाम् , अञ्जलिः=करद्वयसंयोगः 'उन्दुरुर्मूषिकोऽप्याखु'रिति, 'द्वौ युतावञ्जलिः पुमान्' इति चामरः, स्वल्पकेनैव=अल्पेनैव पदार्थेन, सुपूरः=परिपूर्णः, भवति, सुसन्तोषः=सन्तोषप्रकृतिकः, कापुरुषः=भीरुर्निन्दापात्रं च पुरुषः, स्वल्पकेनैव=अल्पलाभेनैव, तुष्यति=हृष्यति ॥ ९ ॥

विलास—जिस प्रकार क्षुद्र नदी थोड़े ही पानी से भर जाती है, मूसे (चूहे) की अञ्जलि थोड़ी ही चीज से भरती है, उसी प्रकार कायर लोग भी थोड़े ही लाभ से तृप्त होते हुए प्रसन्न होते हैं ॥ ९ ॥

**अप्यहेरारुजन् दंष्ट्रामाश्वेव निधनं व्रज ।**
**अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ १० ॥**

**अन्वयः**—अहेः दंष्ट्राम् आरुजन् अपि ( त्वम् ) आशु एव निधनं व्रज, अपि वा जीविते संशयं प्राप्य अपि पराक्रमेः ।

**अर्थः**—अपीति । अहेः=भुजङ्गमस्य सर्पस्येत्यर्थः, 'भुजगोऽहिर्भुजङ्गमः' इत्य-

मरः, दंष्ट्रां=महादन्तम् , आरुजन्नपि=हस्तेनाकृष्य निर्गमयन्नपि, त्वम् , आशु एव= शीघ्रमेव, निधनं = मृत्युं, व्रज=गच्छ, अपि वा = अथवा, जीविते=जीवने, संशयं= सन्देहं, प्राप्य अपि = आसाद्यापि, पराक्रमेः = पराक्रमं कुरु ॥ १० ॥

विलास—सांप के दांत को खींचकर निकालते हुए शीघ्र ही मृत्यु को पा जाओ, अथवा जीवन के विषय में संदेह को पाकर भी अर्थात् अपनी जिंदगी को खतरे में डालते हुए भी पराक्रम कर दिखाओ ॥ १० ॥

**अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।**
**विवदन् वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः ॥ ११ ॥**

**अन्वयः**—( भूमौ सर्वत्र ) व्योम्नि इव अपरिशङ्कितः विपरिक्रमन् श्येनवत् अपरिशङ्कितः विवदन् वा अथवा तूष्णीम् विपरिक्रमन् त्वम् अरेः अपि छिद्रं पश्येः।

**अर्थः**— अपीति । भूमौ = पृथिव्यां, सर्वत्र=सर्वस्मिन् स्थाने, व्योम्नि इव= आकाश इव, अपरिशङ्कितः=अकुतोभयः, विपरिक्रमन्=भ्राम्यन् , श्येनवत्= श्येनाख्यपक्षीव, अपरिशङ्कितः=निर्भयः, विवदन् वा=शत्रुजयोपायविषयेऽन्यैः सह विचारं कुर्वन् वा, अथवा=किंवा, तूष्णीं=मौनी सन्नेव वा, अरेः अपि=शत्रोरेव एवार्थेऽत्रापिशब्दः, छिद्रम् = आक्रमणावसरं, पश्येः = अवलोकयेः ॥ ११ ॥

विलास—आकाश में निर्भय हो घूमनेवाले बाज पक्षी के समान सर्वत्र निर्भयतासे घूमते फिरते शत्रु को मारने की अनेक युक्तियों की चर्चा करते अथवा मौन धारण किये हुए ही शत्रु का छिद्र अर्थात् उसपर वार करने का अवसर देखते रहो ॥११॥

**त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।**
**उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥ १२ ॥**

**अन्वयः**— वज्रहतः यथा त्वं प्रेतवत् कस्मात् एवं शेषे, हे कापुरुष ! शत्रुनिर्जितः ( त्वं ) मा स्वाप्सीः, ( किन्तु ) उत्तिष्ठ ।

**अर्थः**—त्वमिति । वज्रहतः वज्रेण=कुलिशेन 'ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पवि'रित्यमरः, हतः=ताडितः, यथा=इव, त्वं=भवान् , प्रेतवत् = परासुरिव 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः' इत्यमरः, कस्मात्=किङ्कारणात् , एवम्= इत्थं निरुद्यम इवेत्यर्थः, शेषे =निद्रासि, हे कापुरुष=हे निन्द्य, शत्रुनिर्जितः शत्रुणा=वैरिणा, निर्जितः=पराजितः, त्वं, मा स्वाप्सीः=मा शेष्व, किन्तु=अपितु, उत्तिष्ठ=आलस्यं त्यक्त्वा युद्धायोद्यतो भव ॥ १२ ॥

विलास—वज्र (बिजली) के गिरने से मरे मनुष्य की तरह तुम इस प्रकार प्रेत (मुर्दे) के समान क्यों पड़े हो ? हे कायर उठो, शत्रु से पराजित हो न पड़े रहो ॥१२॥

माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधो भूर्तिष्ठ गर्जितः ॥ १३ ॥

**अन्वयः**—त्वं कृपणः ( सन् ) अस्तं मा गमः, स्वकर्मणा विश्रूयस्व, त्वं माध्ये मा भूः, जघन्ये मा भूः, अधश्च मा भूः, ( अपितु ) गर्जितः सन् तिष्ठ ।

**अर्थः**—माऽस्तमिति । त्वं=भवान् , कृपणः सन्=दैन्ययुक्तः सन् , अस्तं= नाशं, मा गमः = न गच्छ, स्वकर्मणा = क्षत्रियोचितशौर्येण, विश्रूयस्व=प्रसिद्धिं प्राप्नुहि, त्व = भवान् , मध्ये = उपायचतुष्टयान्तर्गते भेदाख्य उपाये, मा भूः=मा भव, जघन्ये = सामोपायेऽपि, मा भूः = मा भव, = सर्वत्र माङ्योगेऽडागमनिषेधः, अधश्च = नीचैश्च दाने चापि, मा भूः = न वर्तस्व, अपितु = किन्तु, गर्जितः सन्= दण्डयितैव सन् , तिष्ठ = वर्तस्व ॥ १३ ॥

विलास—तुम दीनता से लुप्त न हो जाओ, अपने कर्म ( शूरता ) से प्रसिद्धि को पाओ, उपाय-चतुष्टय में से मध्य (भेद) में नहीं, जघन्य (साम) में नहीं तथा अध अर्थात् नीच (दान) में भी न होओ अर्थात् इन तीन-सामदानभेद-का प्रयोग करने-वाले न बनो किन्तु गरजते हुए तुम अर्थात् दण्डरूप चतुर्थ उपाय का अवलम्बन कर बने रहो ॥ १३ ॥

अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १४ ॥

**अन्वयः**—जिजीविषुः ( त्वं ) मुहूर्तम् अपि तिन्दुकस्य अलातम् इव हि ज्वल, तुषाग्निः इव अनर्चिः ( सन् ) मा धूमायस्व ।

**अर्थः**—अलातमिति । जिजीविषुः =जीवितुमिच्छुः, त्वं, मुहूर्तम् अपि=क्षण-मात्रमपि, तिन्दुकस्य=तन्नामककाष्ठविशेषस्य, अलातम् इव=स्फुलिङ्ग इव, हि=निश्च-येन, ज्वल = उद्दीप्तो भव, तुषाग्निरिव=तुषस्य=शालिबुसस्य, अग्निरिव = वह्निरिव 'अग्निर्वैश्वानरो वह्नि'रित्यमरः, अनर्चिः नास्ति = न विद्यते, अर्चिः = ज्वाला यस्येति ज्वालारहित इत्यर्थः, मा = नहि, धूमायस्व = धूमवत् आचर नेत्रादि-पीडाकरो मा भूरित्यर्थः ॥ १४ ॥

विलास—यदि तुम संसार में जीवित रहना चहते हो तो तेंदू लकड़ी की चिन-गारी की भांति थोड़े समय ही चमक उठो, ज्वालारहित तुम (भूप) की आग के समान धूआं दे अर्थात न चमक कर लोगों को दुखदायी न बनो ॥ १४ ॥

मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद् गेहे जनि राज्ञः खरो मृदुः ॥ १५ ॥

Library Sri Pratap College Srinagar

**अन्वयः**—मुहूर्तं ज्वलितं श्रेयः, चिरं धूमायितं न च श्रेयः, कस्यचित् राज्ञः गेहे खरः मृदुः मा स्म जनि ह ।

**अर्थः**—मुहूर्तमिति । मुहूर्तं=क्षणमात्रं, ज्वलितं=दीपनं, श्रेयः=उत्तमम्, चिरं= चिराय, धूमायितं = धूम्रायितं, न च श्रेयः = कल्याणकरं न, कस्यचित् = कस्यापि, राज्ञः = पार्थिवस्य 'राजा राट् पार्थिवक्ष्माभृदि'त्यमरः, गेहे = गृहे 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इत्यमरः, खरः = कर्कशः, मृदुः = दयालुः, मा स्म जनि = नोत्पद्यताम्, ह = इति पादपूरणे ॥ १५ ॥

विलास—थोड़ी देर का जल उठना अच्छा अर्थात् अल्प जीवन पाकर भी प्रसिद्धि को पाना भला परन्तु चिरकाल तक धूआं का-सा दूसरों को कष्टदायक होना अच्छा नहीं, किसी भी राजा के घर मृदु अर्थात् सब कुछ सहनेवाला और तीक्ष्ण अर्थात् कुछ न सह सकनेवाला पुत्र जन्म न ले ॥ १५ ॥

**कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम् ।**
**धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १६ ॥**

**अन्वयः**—(नरः) मानुष्यकम् उत्तमं यावत् कर्म कृत्वा आजिं सृत्वा धर्मस्य आनृण्यम् आप्नोति, आत्मानं च न विगर्हते ।

**अर्थः**—कृत्वेति । नरः = मनुष्यः, मानुष्यकं = मनुष्योचितम्, उत्तमं=श्रेष्ठं, यावत् = पूर्णं, कर्म = कार्यम्, कृत्वा=विधाय, आजिं = सङ्ग्रामं, सृत्वा=अभिसृत्य विजित्येर्थः, धर्मस्य=कर्तव्यस्य, आनृण्यम् = ऋणराहित्यम्, आप्नोति=प्राप्नोति, आत्मानं च=स्वं च, न विगर्हते=न निन्दति ॥ १६ ॥

विलास—आदमी मनुष्योचित सभी अच्छे कार्य कर युद्ध को जीतकर धर्म से उऋण ( मुक्त ) होजाता है और अपने आपको निन्दित नहीं बना लेता, न वैसा मानता है ॥ १६ ॥

**अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।**
**आनन्तर्यं चाऽऽरभते न प्राणानां धनायते ॥ १७ ॥**

**अन्वयः**—पण्डितः अलब्ध्वा लब्ध्वा वा यदि न अनुशोचति, प्राणानाम् आनन्तर्यम् आरभते, न च धनायते ।

**अर्थः**—अलब्ध्वेति । पण्डितः=सदसद्विवेकशीलः प्राज्ञ इत्यर्थः, 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः' इत्यमरः, अलब्ध्वा=अप्राप्य अभीष्टमिति शेषः, लब्ध्वा वा=प्राप्य वा, यदि=चेत्, तर्हि, न अनुशोचति=न विषीदति, प्राणानां= प्राणाः=बलं, तत्साध्यानां कार्याणाम्, आनन्तर्यम्=अविच्छेदेन कार्यम्,

आरभते = प्रारभते, न च = नैव, धनायते = आत्मनो धनमिच्छति तृष्णां त्यजतीत्यर्थः ॥ १७ ॥

विलास—विद्वान् सफलता प्राप्त होने या न होने पर दुखी नहीं बना रहता, शक्ति से साध्य कार्यों को लगातार करता है, धन की लालच छोड़ देता है ॥ १७ ॥

**उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।**
**धर्मं पुत्राग्रतः कृत्वा किं निमित्तं हि जीवसि ॥ १८ ॥**

**अन्वयः**—हे पुत्र ! ( त्वं ) वीर्यं वा उद्भावयस्व, तां वा ध्रुवां गतिं गच्छ, हि धर्मम् अग्रतः कृत्वा किं निमित्तं जीवसि ।

**अर्थः**—उद्भावयस्वेति । हे पुत्र = हे सुत सञ्जय ! त्वं, वीर्यं वा = शौर्यं वा, उद्भावयस्व = प्रदर्शय, तां वा = प्रसिद्धां, ध्रुवां = निश्चितां, गतिं = दशां मरणमित्यर्थः, गच्छ = व्रज, सपरिहासं चाग्रे कथयति-धर्ममिति । हि = तथाहि, धर्मं = सुकृतं, 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष' इत्यमरः, अग्रतः अग्रे संमुखमित्यर्थः, कृत्वा = विरच्य अर्थात् स्वधर्मात् प्रच्युत्य, किंनिमित्तं = किमर्थं, जीवसि = प्राणान् धारयसे ॥ १८ ॥

विलास—हे पुत्र ! या तो पराक्रम कर दिखाओ नहीं तो उस निश्चित गति (मृत्यु) को पाओ, (परिहास से) धर्म को संमुख कर अर्थात् धर्म से मुह मोड़ कर क्यों जीवित रहना चाहते हो ॥ १८ ॥

**इष्टापूर्त्तं हि ते क्लीब कीर्तिश्च सकला हता ।**
**विच्छिन्नं भोगमूलं ते किं निमित्तं हि जीवसि ॥ १९ ॥**

**अन्वयः**—हे क्लीब ! ते इष्टापूर्तं, सकला कीर्तिश्च हता, हि ते भोगमूलं विच्छिन्नम्, ( तत् ) किं निमित्तं जीवसि ।

**अर्थः**—इष्टापूर्तमिति । हे क्लीब != हे पौरुषहीन वत्स !, ते = तव त्वया सम्पादितमित्यर्थः, इष्टापूर्तम् = इष्टं = यज्ञादि, पूर्तं = खातादिकर्म च इष्टापूर्तं = सत्कर्म, नष्टमित्यर्थः, सकला = समग्रा 'समग्रं सकलं पूर्ण'मित्यर्थः, कीर्तिश्च = यशश्च, हता = नष्टा, हि = तथैव च, ते = तव, भोगमूलं = राज्यं धनं वा, विछिन्नं = विनष्टम्, तत् = तस्मात्करणात्, किं निमित्तं = किं प्रयोजनमुद्दिश्य, जीवसि = जीवनं धारयसीत्यर्थः ॥

विलास—हे नपुंसक ! तुम्हारा सारा इष्टापूर्त ( यज्ञयागादि तथा कूआ, तालाब, धर्मशालादि का निर्माण ) कर्म और उससे उत्पन्न कीर्ति नष्ट हुई तथा भोग का साधन राज्य ऐश्वर्य आदि भी नष्ट हुआ, फिर किसलिये जीवित बने हो ॥ १९ ॥

**शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।**
**विपरिच्छिन्नमूलोऽपि न विषीदेत् कथञ्चन ॥ २० ॥**

**अन्वयः**—निमज्जता प्रपतिष्यता वा ( पुंसा ) शत्रुः जङ्घायां ग्राह्यः, विपरि-

च्छिन्नमूलः अपि कथञ्चन न विषीदेत् ।

**अर्थः**—शत्रुरिति । निमज्जता=ब्रुडता, प्रपतिष्यता=पतनशीलेन वा, पुंसा=पुरुषेण, शत्रुः=वैरी, जङ्घायां=प्रसृतायां जानौ 'जङ्घा तु प्रसृता जानु'रित्यमरः, ग्राह्यः=आसाद्यः हन्तव्य इत्यर्थः, विपरिच्छिन्नमूलः विपरिच्छिन्नं=नष्टं, मूलम्=अवलम्बस्थानादि यस्यैवम्भूतोऽपि, कथञ्चन=कथमपि, न विषीदेत्=नखिद्येत् अर्थात् सर्वदा प्रयत्नं कुर्यात् ॥ २० ॥

विलास--डूबता या गिरता हुआ वीर अपनी जांघ पर शत्रु को ले अर्थात् उसके साथ ही डूबे या गिरे, अपनी सारी जड़ कट जाने पर भी किसी प्रकार खेद न करे अर्थात् शूर को प्रयत्नहीन कभी न होना चाहिये ॥ २० ॥

**उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ।**
**कुरु सत्त्वं च मानं च विद्धि पौरुषमात्मनः ॥ २१ ॥**

**अन्वयः**—आजानेयकृतं स्मरन् ( पुमान् ) उद्यम्य धुरम् उत्कर्षेत् , सत्त्वं कुरु, आत्मनः पौरुषं मानं च विद्धि ।

**अर्थः**—उद्यम्येति। आजानेयकृतम्=आजानेयैः कृतम् आजानेयकृतम् आजानेयैः=कुलीनैरश्वैः, 'आजानेयाः कुलीनाः स्यु'रित्यमरः, कृतम्=आचरितं, स्मरन्=स्मरणं कुर्वन् , पुमान्=पुरुषः, उद्यम्य=प्रयत्य, धुरं=युद्धराज्यादिभारम् , उत्कर्षेत्=उन्नयेत् , त्वं, सत्त्वं=पराक्रमं, कुरु=विधेहि युध्यस्वेत्यर्थः, आत्मनः=स्वस्य, पौरुषं=सामर्थ्यं, मानं च = कुलाभिमानं च, विद्धि = जानीहि विचारयेत्यर्थः ॥ २१ ॥

विलास--कुलीन अच्छी जात के घोड़ों का चालचलन अर्थात् उनका कार्य स्मरण करते हुए प्रयत्न करके भार को उठाना चाहिये अर्थात् युद्ध में प्राण तक देने के लिए तैयार होना चाहिये, शूरता दिखाओ और अपने जात्यभिमान तथा पुरुषार्थ को समझो अर्थात् इन बातों को अपने मन में जमाओ ॥ २१ ॥

**उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ॥ २२ ॥**

**अन्वयः**—त्वत्कृते मग्नं कुलं स्वयमेव उद्भावय हि ।

**अर्थः**—उद्भावयेति । त्वं, त्वत्कृते=त्वत्कारणात् , मग्नं=निमग्नं कुलं=वंशम्, उद्भावय=उन्नमय पौरुषेणेत्यर्थः, हि=पादपूरणे 'हि तु च स्म ह वै पादपूरणे' इति कोशः ॥ २२ ॥

विलास--इसी प्रकार तुम्हारे कारण डूबनेवाले कुल का तुम्हें स्वयं ही उद्धार करना चाहिये ॥ २२ ॥

**यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।**
**राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ २३ ॥**

**अन्वयः**—मानवाः यस्य वृत्तं महत् अद्भुतं न जल्पन्ति, सः राशिवर्धनमात्रं, नैव स्त्री, पुनः न पुमान् ।

**अर्थः**—यस्येति । मानवाः=मनुष्याः 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः' इत्यमरः, यस्य=यस्य पुरुषस्य, वृत्तं=चरित्रं 'वृत्तं पद्ये चरित्रे चे'त्यमरः, महत्=विशालम्, अद्भुतम्=आश्चर्यकरं, न जल्पन्ति=न गायन्ति, सः=पुमान्, राशिवर्धनमात्रं राशेः=मनुष्यगणनायाः, वर्धनं = प्रवर्धनं तदेव राशिवर्धनमात्रं केवलं मनुष्यगणनायाः संख्यापूरको भवति, स च, नैव स्त्री=नैव नारी 'स्त्री योषिदबला योषा नारी'ति कोशः, पुनः=भूयः अपिचेत्यर्थः, न पुमान्=न पुरुषः ॥ २३ ॥

विलास—मनुष्य जिसके चरित्र को अद्भुत तथा महान नहीं कहते वह केवल आदमी की गणना पूरी करनेवाला, किसी दूसरे काम का नहीं होता, ऐसा पुरुष न स्त्री ही है और न पुरुष ही है, बेकार है ॥ २३ ॥

**दाने तपसि सत्ये च यस्य नोच्चरितं यशः ।**
**विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ २४ ॥**

**अन्वयः**—यस्य यशः दाने तपसि सत्ये विद्यायाम् अर्थलाभे वा न उच्चरितं, सः मातुः उच्चार एव ।

**अर्थः**—दान इति । यस्य=पुंसः, यशः=प्रसिद्धिः, दाने=त्यागे 'त्यागो विहापितं दान'मित्यमरः, तपसि=तपोऽनुष्ठाने, सत्ये=सत्यवचने, विद्यायां=ज्ञानसम्पादने, अर्थलाभे=द्रव्यप्राप्तौ वा, न=नैव, उच्चरितं=कथितं जनैरिति शेषः, सः=पुरुषः, मातुः=जनन्याः, उच्चार एव = विष्ठैव 'उच्चारावस्करौ शमलं शकृत् । पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रिया'विति कोशः ॥ २४ ॥

विलास—जिसका यश विद्या पढ़ने, द्रव्य कमाने, दान देने, तप करने या सत्य भाषण में नहीं गाया जाता, वह मा का मैल ( विष्ठा ) है ॥ २४ ॥

**श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ।**
**जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ॥ २५ ॥**

**अन्वयः**—यः श्रुतेन तपसाऽपि वा श्रिया वा विक्रमेण वा कर्मणा अन्यान् जनान् अभिभवति, हि सः पुमान् वै ।

**अर्थः**—श्रुतेनेति । यः=पुरुषः, श्रुतेन=शास्त्राद्यध्ययनेन, तपसाऽपि वा=सदनुष्ठानेन वा, श्रिया वा=सम्पत्या वा 'सम्पत्तिः श्रीश्च लक्ष्मीश्चे'त्यमरः, कर्मणा=कार्येण, अन्यान्=इतरान्, जनान्=लोकान्, अभिभवति=आक्रामति वैशिष्ट्यमधिगच्छतीत्यर्थः, हि=निश्चयेन 'हि हेताववधारणे' इति कोशः, सः=मनुष्यः, पुमान्=पुरुषपदवाच्यः, वै=इति पादपूरणे ॥ २५ ॥

विलास--जो मनुष्य अध्ययन, तप, सम्पत्ति अथवा पराक्रम आदि कर्म से दूसरे लोगों को हराता है अर्थात् उनसे बढ जाता है, वही निश्चयरूप से पुरुष कहा जा सकता है ॥ २५ ॥

न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ २६ ॥

**अन्वयः**—( त्वं ) नृशंस्याम् अयशस्यां दुःखां कापुरुषोचितां च जाल्मीं कापालीं वृत्तिम् एषितुं तु न अर्हसि ।

**अर्थः**—नेति । त्व, नृशंस्यां=घातुकां 'नृशंसो घातुकः क्रूर' इत्यमरः, अयशस्यां=दुष्कीर्तिकरीं, दुःखां=कष्टप्रदां, कापुरुषोचितां कापुरुषाणां=निन्दास्पदानां पुंसाम् उचितां = योग्यां च, नतु स्वाभिमानिनामित्यर्थः, जाल्मीं = पामरीं नीचामित्यर्थः, 'जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु' इति मेदिनी, 'जाल्मोऽसमीक्ष्यकारी स्या'दिति चामरः, कापालीं वृत्तिं=भिक्षाचर्याम् , एषितुं= मार्गितुं तु, न अर्हसि=न योग्योऽसि, भिक्षावृत्तिस्ते नोचितेति तात्पर्यम् ॥ २६ ॥

विलास--घातक तथा दुष्कीर्ति को उपजानेवाली, दुखदायी, कायरों के लिये योग्य, नीच भिखमङ्गों की वृत्ति तुम्हे कभी नहीं करनी चाहिये ॥ २६ ॥

यमेनमभिनन्देयुरमित्राः पुरुषं कृशम् ।
लोकस्य समवज्ञातं निहीनासनवाससम् ॥ २७ ॥
अहोलाभकरं हीनमल्पजीवनमल्पकम् ।
नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते ॥ २८ ॥

**अन्वयः**—अमित्राः लोकस्य समवज्ञातं निहीनासनवाससम् अहोलाभकरं हीनम् अल्पजीवनम् अल्पकं कृशं यम् एवं पुरुषम् अभिनन्देयुः, बान्धवः ईदृशं बन्धुम् आसाद्य सुखं न एधते ।

**अर्थः**—सर्वथा निन्द्यात् पुरुषाद्बान्धवाः सुखं नाप्नुवन्तीति युग्मेन दर्शयति-यमिति, अहोलाभकरमिति च । अमित्राः=शात्रवाः 'द्विड्विपक्षाहितामित्रदस्युशात्रव-शत्रव' इत्यमरः, लोकस्य = जनस्य 'लोकस्तु भुवने जने' इति कोशः, जनै-रित्यर्थः, समवज्ञातं = निन्दितं, निहीनासनवाससं नितरां = भृशं, हीने = स्वल्पे, आसनं = स्थानं, वासः = वस्त्रं च यस्य तं 'वस्त्रमाच्छादनं वास' इत्यमरः, अहो-लाभकरं = स्वल्पे लाभेऽपि 'अहो मे लाभो जात' इति विस्मयं कुर्वाणं, हीनं = दुष्कर्मपतितम् , अल्पजीवनं = स्वल्पायुषम् , अल्पकं=नीचं, कृशं = दुर्बलं, यम् एनं = यमिमं, पुरुषं = पुमांसम् , अभिनन्देयुः = प्रशंसेयुः बान्धवः = बन्धुगणः,

ईदृशम् = एतादृशं, बन्धुं=बान्धवम् , आसाद्य=प्राप्य, सुखं=सुखपूर्वकं यथा स्यात्तथेति क्रियाविशेषणम् , न एधते = न वर्धते ॥ २७–२८ ॥

विलास—लोगों से अनादर पाये, अति हीन भोजन तथा वस्त्र वाले, थोड़े लाभ में अधिक लाभ मान कर आश्चर्य करनेवाले, नीचहृदय, स्वल्पजीवी, क्षुद्र तथा कृश जिस इस पुरुष को देख या पा कर शत्रु प्रसन्न हो जांय, बान्धवगण ऐसे बन्धु को पाकर सुखी नहीं होते ॥ २७–२८ ॥

**अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात् प्रवासिताः ।**
**सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिञ्चनाः ॥ २९ ॥**

**अन्वयः**—राष्ट्रात् प्रवासिताः सर्वकामरसैः हीनाः स्थानभ्रष्टाः अकिञ्चनाः वयम् अवृत्त्या एव विपत्स्यामः ।

**अर्थः**—आत्मनिश्चयं दर्शयति-अवृत्त्येति । राष्ट्रात्=राज्यात् , प्रवासिता=निष्कासिताः, सर्वकामरसैः = सर्वे=सम्पूर्णाः ये कामरसाः=मनोरथाः तैः, हीनाः = रहिताः, स्थानभ्रष्टाः स्थानात्=वसतेः भ्रष्टाः=च्युताः, अकिञ्चनाः नास्ति किञ्चन येषां तेऽकिञ्चनाः = निर्धनाः, वयम् , अवृत्त्या एव = जीविकोपायाभावेनैव, विपत्स्यामः = नङ्क्ष्यामः मरिष्याम इत्यर्थः ॥ २९ ॥

विलास—हम लोग राज्य से निकाले जाकर निवास स्थान के अभाव में सभी इच्छित आनन्द से हीन तथा निर्धन रह बिना जीविका के ही मर मिटेंगे—ऐसा मालूम होता है ॥ २९ ॥

**अवल्गुकारिणं सत्सु कुलवंशस्य नाशनम् ।**
**कलिं पुत्रप्रवादेन सञ्जय त्वामजीजनम् ॥ ३० ॥**

**अन्वयः**—हे सञ्जय ! (अहं) सत्सु अवल्गुकारिणं कुलवंशस्य नाशनं त्वां पुत्रप्रवादेन कलिम् अजीजनम् ।

**अर्थः**—अवल्गुकारिणमिति । हे सञ्जय=हे पुत्र, अहं, सत्सु=सज्जनेषु, अवल्गुकारिणम् अवल्गु=असुन्दरं करोतीति तच्छीलं निश्श्रेष्ठमित्यर्थः, कुलवंशस्य कुलं = ज्ञातिः, वंशः = सोमसूर्यादिमूलोत्पत्तिस्थानम् तस्य ज्ञातेर्मूलपुरुषस्य च, नाशनं = कलङ्कोत्पादकत्वाद्विनाशकं, त्वां = भवन्तं, पुत्रप्रवादेन=पुत्र इति प्रवादः तेन पुत्रः = सुतः इति, प्रवादः = निन्दा तेन पुत्ररूपेणेत्यर्थः, कलिं = कलियुगं, सर्वथा नाशकरमिति भावः, अजीजनम् = उदपादयम् ॥ ३० ॥

विलास—हे संजय ! मैंने तुमको सज्जनों में अमङ्गल करनेवाले अर्थात् आलसी तथा कुल (ज्ञाति) और वंश (सूर्य-चन्द्र आदि नाम से प्रसिद्ध) के नाशक पुत्र के रूप में कलियुग उत्पन्न किया ॥ ३० ॥

निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ॥ ३१ ॥

**अन्वयः**—काचित् सीमन्तिनी निरमर्षं निरुत्साहं निर्वीर्यम् अरिनन्दनम् ईदृशं पुत्रं मा स्म जनयेत् ।

**अर्थः**—निरमर्षमिति । काचित्=कापि सीमन्तिनी=नारी 'नारी सीमन्तिनी वधू'रित्यमरः, निरमर्षम्=अमर्षात् निर्गतः निरमर्षः तम् अमर्षात्=क्रोधात् 'कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रिया'वित्यमरः, निर्गतः=बहिर्भूतः क्रोधरहित इत्यर्थः, "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः, एवमुत्तरत्रापि, निरुत्साहम्=उत्साहशक्तिरहितं, निर्वीर्यं=सामर्थ्यहीनम् , अरिनन्दनं=शत्रुहर्षप्रदम् , ईदृशं=पूर्वोक्तलक्षणसम्पन्नं, पुत्रं=तनयम् 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी' त्यमरः, मा स्म जनयेत्=नोत्पादयेत् न जन्म दद्यादिति ॥ ३१ ॥

विलास—कोई भी स्त्री क्रोधहीन, उत्साहरहित, पराक्रमशून्य, शत्रु को आनन्ददायक ऐसे पुत्र को जन्म ही न दे ॥ ३१ ॥

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥ ३२ ॥

**अन्वयः**—( त्वं ) मा धूमाय अत्यन्तं ज्वल, आक्रम्य शात्रवान् जहि, मुहूर्तं क्षणं वाऽपि अमित्राणां मूर्धनि ज्वल ।

**अर्थः**—मेति । त्वं, मा=नैव, धूमाय=धूमवत् परपीडाकरो भव, अत्यन्तम्=अधिकं यथा स्यात्तथा, ज्वल=प्रकाशस्व, आक्रम्य=अभियाय स्वयमेव शत्रूणामुपरि आक्रमणं कृत्वेत्यर्थः, शात्रवान्=शत्रून 'दस्युशात्रवशत्रव' इत्यमरः, जहि=मारय, मुहूर्तं=स्वल्पकालं, क्षणं वापि=ततोऽपि न्यूनसमयावध्यपि, अमित्राणां=विपक्षाणां 'द्विड्विपक्षाऽहिताऽमित्रे'ति कोशः, मूर्धनि=मस्तके, 'मूर्धा ना मस्तकोऽस्त्रिया'मित्यमरः, ज्वल=प्रकाशमानः सँस्तिष्ठ शत्रून् स्वशौर्येण दमयेत्यर्थः ॥ ३२ ॥

विलास—धूम की तरह मलिन न हो, खूब चमक उठो, आक्रमण कर शत्रुओं को मार डालो, घड़ी या पल भर भी शत्रुओं के सिर पर जल उठो ॥ ३२ ॥

एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ ३३ ॥

**अन्वयः**—पुरुषः एतावान् एव यत् अमर्षी यत् अक्षमी च, क्षमावान् च निरमर्षः ( यः अस्ति, स ) न एव स्त्री, न पुनः पुमान् ( अस्ति ) ।

**अर्थः**—एतावानिति । पुरुषः=सामर्थ्यशाली पुमान् , एतावान् एव=ईदृश

एव, यत्=यस्मात् कारणात, अमर्षी=सति कारणे क्रुद्धः, अथ च, यत्=यतश्च, अक्षमी=क्षमारहितश्च, क्रुद्धः सन् क्षमां नैव कुर्वाण इत्यर्थः, क्षमावान्=शान्तः, च=पुनः, निरमर्षः=क्रोधशून्यः, योऽस्ति, सः, न एव=नैव, स्त्री-योषित्, न पुनः=नापि च, पुमान्=पुरुषः पुरुषपदवाच्योऽस्ति ॥ ३३ ॥

विलास—ऐसा ही पुरुष कहलाता है जो कि अपने शत्रु के विषय में क्रुद्ध तथा क्षमा न करनेवाला है, क्षमावान और क्रोधहीन मनुष्य न स्त्री ही है और न पुरुष ही है ॥ ३३ ॥

**सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च।**
**अनुत्थानभये चोभे निरीहो नाश्नुते महत् ॥ ३४ ॥**

**अन्वयः**—सन्तोषः श्रियं वै हन्ति, तथा अनुक्रोशः एव च (श्रियं हन्ति), उभे अनुत्थानभये च श्रियं (हतः,) निरीहः (पुमान्) महत् न अश्नुते।

**अर्थः**—सन्तोष इति। सन्तोषः=तृप्तिः, श्रियं=सम्पदं, वै=निश्चयेन, हन्ति=नाशयति, तथा=तेन प्रकारेण, अनुक्रोशः एव च=दयाऽपि च 'कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपी'ति कोशः, श्रियं हन्ति=लक्ष्मीं नाशयति, उभे=द्वे, अनुत्थानभये अनुत्थानं च भयं च अनुत्थानभये अनुत्थान=शत्रुं प्रति विजयेच्छयाऽनाक्रमणं, भयं=साध्वसं च 'भीतिर्भीः साध्वसं भय'मित्यमरः, ते, श्रियं हतः, निरीहः=निःस्पृहः 'इच्छाकाङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथ' इत्यमरः निश्चेष्ट इत्यर्थः, पुमान्=पुरुषः, महत्=महत्त्वं गौरवमित्यर्थः, न अश्नुते=न प्राप्नोति ॥ ३४ ॥

विलास—सन्तोष तथा दया भी निश्चय ही लक्ष्मी का नाश करते हैं और शत्रु पर आक्रमण न करना तथा भय ये दोनों सम्पत्ति नाशक इच्छारहित अर्थात् आलसी महान पद को नहीं पाता ॥ ३४ ॥

**एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना।**
**आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ॥ ३५ ॥**

**अन्वयः**—(त्वम्) एभ्यः निकृतिपापेभ्यः आत्मना आत्मानं प्रमुञ्च, =हृदयम् आयसं कृत्वा पुनः स्वकं मृगयस्व।

**अर्थः**—एभ्य इति। त्वम्, एभ्यः=अमीभ्यः, निकृतिपापेभ्यः निकृतेः=पराभवस्य, पापानि=दोषाः तेभ्यः, आत्मना=स्वेन, आत्मानं=स्व, प्रमुञ्च=त्यज पराभवजन्यदोषमुक्तो भवेति तदाशयः, हृदयं=चेतः 'चित्तं तु चेतो हृदय'मित्यमरः, आयसं=लौहमयं दृढमित्यर्थः, कृत्वा=विधाय, पुनः=भूयः, स्वकं=धनादिकं, मृगयस्व=अन्वेषय, युद्धं कृत्वा पुनरपि राज्यादिकं प्रत्यावर्तयेति गूढम् ॥ ३५ ॥

विलास—तुम स्वयं ही इन पराजय आदि दोषों से अपनेको छुड़ाओ, लोहे का-सा

हृदय बनाकर फिर अपने धन राज्य इत्यादि को ढूँढ निकालो अर्थात् शत्रु से छीन लो ॥ ३५ ॥

परं विषहते यस्मात्तस्मात् पुरुष उच्यते।
तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति ॥ ३६ ॥

**अन्वयः**—यस्मात् ( नरः ) परं विषहते, तस्मात् पुरुषः उच्यते, यः इह स्त्रीवत् जीवति, तं व्यथनामानम् आहुः।

**अर्थः**—परमिति। नरः, यस्मात् = यतो हेतोः, परं = शत्रुं तदाक्रमणादिकमपीत्यर्थः, विषहते = विशेषेण मर्षयति अभ्युत्थानादिना शत्रून् पराजेतुं सन्नद्ध एव सर्वदा तिष्ठति, तस्मात् = ततः कारणात्, पुरुषः = शूरो नर इति, उच्यते= कथ्यते, एतेनार्धेन वर्णविकारादिना पुरुषपदनिर्वचनं प्रोक्तम्, यः = मनुष्यः, इह=संसारे, स्त्रीवत्=नारीव, जीवति=श्वसिति=प्राणान् धारयतीत्यर्थः, तं = मानवं, व्यर्थनामानं व्यर्थ = निरर्थकं, नाम = पुरुषपदव्यवहाराभिधानं यस्य तथाभूतम्, आहुः = ब्रुवन्ति कथयन्तीत्याशयः ॥ ३६ ॥

विलास—जो शत्रु को अर्थात् उसके आक्रमणों को दृढ़ता से सहता अपना कार्य बराबर करता रहता है उसीको व्युत्पत्ति द्वारा पुरुष कहते हैं, जो इस संसार में स्त्री की भाँति अर्थात् परावलंबी होकर जीता है उसे व्यर्थ ही 'पुरुष' इस नाम से कहते हैं॥३६॥

शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तचारिणः।
दिष्टभावं गतस्यापि विषये मोदते प्रजा ॥ ३७ ॥

**अन्वयः**—ऊर्जितसत्त्वस्य सिंहविक्रान्तचारिणः दिष्टभावं गतस्य अपि शूरस्य विषये प्रजा मोदते।

**अर्थः**—शूरस्येति। ऊर्जितसत्त्वस्य ऊर्जितं = सम्पादितं वर्धितं च, सत्त्वं= बलं येन तस्य, सिंहविक्रान्तचारिणः सिंहस्येव विक्रान्तेन चरतीति तथाभूतस्य सिंहस्येव = केसरिण इव 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरि'रित्यमरः, विक्रान्तेन = शौर्येण, चरतीति = गच्छतीति तादृशस्य, दिष्टभावं = मरणं, गतस्यापि=प्राप्तस्यापि शूरस्य = वीरस्य 'शूरो वीरश्च विक्रान्त' इति कोशः, विषये=देशे, गृहे, राज्ये वा, प्रजा = सन्ततिः जनो वा 'प्रजा स्यात् सन्ततौ जने' इत्यमरः, मोदते = हृष्यति नन्दतीत्यर्थः ॥ ३७ ॥

विलास--शूर, पराक्रमी तथा सिंह के समान बलशाली के मर जाने पर भी उसकी प्रजा या सन्तान उस देश में प्रसन्न रहती है ॥ ३७ ॥

यः आत्मनः प्रियसुखे हित्वा मृगयते श्रियम्।
अमात्यानामथो हर्षमादधात्यचिरेण सः ॥ ३८ ॥

**अन्वयः**—यः आत्मनः प्रियसुखे हित्वा श्रियं मृगयते, अथो सः अचिरेण अमात्यानां हर्षम् आदधाति ।

**अर्थः**—य इति । यः=राजा, आत्मनः=स्वस्य, प्रियसुखे प्रियश्च सुखञ्चेति ते प्रियसुखे प्रियः = पुत्रादिः, सुखं=तदालिङ्गनचुम्बनादि ते, द्वितीयाद्विवचनान्तमिदं, हित्वा =त्यक्त्वा, श्रियं = राज्यलक्ष्मीं, मृगयते = अन्विषति तदर्थं चेष्टत इति यावत् , अथो=अनन्तरं 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति कोशः, सः = नृपतिः, अचिरेण = शीघ्रमेव, अमात्यानां =सचिवानां 'मन्त्री धीसचिवोऽमात्य' इत्यमरः, हर्षं=मुदम् 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः, आदधाति= उत्पादयति मन्त्रिप्रभृतीनानन्दयतीत्यर्थः ॥ ३८ ॥

विलास—जो अपने प्रिय (पुत्रादि) तथा सुख (आलिङ्गन) को छोड़ कर लक्ष्मी की खोज करता है, बाद वह शीघ्र ही मन्त्री आदि को आनन्दित करता है ॥ ३८ ॥

**पुत्र उवाच**—

**किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।**
**किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ३९ ॥**

पुत्रः = सञ्जयनामा सुतः, उवाच = उपदेशश्रवणोत्तरं जिज्ञासया पप्रच्छ ।

**अन्वयः**—माम् अपश्यन्त्याः ते सर्वया अपि पृथिव्या किं नु, ते आभरण-कृत्यं किम् , भोगैः जीवितेन वा किम् ? ।

**अर्थः**—किमिति । मां=मा, अपश्यन्त्याः=अनवलोकयन्त्याः मन्मरणोत्तर-मिति भावः, ते=तव, सर्वया अपि=सकलयापि, पृथिव्या=मेदिन्या 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही'त्यमरः, 'पृथिव्या अपी'त्यत्र सवर्णदीर्घाभावरूपोऽसन्धिरार्षः, किं नु = किं प्रयोजनमस्ति व्यर्थत्वात् , ते=तव, आभरणकृत्यम् आभर-णानाम् = आभूषणानां, कृत्यं = कार्यं च, किं=किम्प्रयोजनम् , भोगैः=धनादिभिः, जीवितेन = जीवनेन वा, किम् = किङ्कार्यम । यद्यहं युद्धे शत्रुभिर्हतः स्यामथवा दैवेच्छया मरणं प्राप्नुयां तर्हि पृथिव्यादिसकलपदार्थैस्तव को लाभः स्यात् , यदर्थं मां योद्धुं प्रवर्तयसि—इति प्रश्नतात्पर्यम् ॥ ३९ ॥

**पुत्र सञ्जय ने प्रश्न के रूप में मा से कहा**—

विलास—मुझको न देखते हुए अर्थात् मेरे न रहने पर या मर जाने पर तुमको सम्पूर्ण पृथ्वी से क्या लाभ ? तुम्हें आभूषण, सुखोपभोग तथा जीवन से भी क्या प्रयोजन रहेगा ? तात्पर्य युद्ध में मेरे मर जाने पर सारी पृथ्वी, भूषण, सुखभोग तथा जीवन भी तुम्हारे लिए व्यर्थ होगा, तो क्यों मुझे युद्ध के लिये बार बार कहती हो १९

Library Sri Pratap College Srinagar

मातोवाच—

किमद्यकानां ये लोका द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान् व्रजन्तु नः ॥ ४० ॥

माता = जननी विदुला, उवाच = प्रश्नस्योत्तरदित्सया कथयितुमारभत ।

**अन्वयः**—किमद्यकानां ये लोकाः ( सन्ति ), द्विषन्तः तान् अवाप्नुयुः, आदृतानां तु ये लोकाः ( सन्ति ), नः सुहृदः तान् व्रजन्तु ।

**अर्थः**—किमद्यकानामिति । किमद्यकानां किम् अद्यं=किं भक्षणीयमिति ये चिन्तयन्ति = विचारयन्ति ते किमद्यकाः = निर्धनाः, यद्वा किम् अद्य त्वरया, श्व एव शत्रून् जेष्याम इति ये चिन्तयन्ति ते किमद्यकाः=विलम्बशीलाः तेषां, ये लोकाः=यानि भुवनानि 'लोकस्तु भुवने जने' इत्यमरः, सन्ति, द्विषन्तः=रिपवोऽस्माकं, तान्=लोकान् , अवाप्नुयुः = प्राप्नुयुः । आदृतानां=यशस्विनां तु, ये लोकाः सन्ति, नः=अस्माकं, सुहृदः=सखायः 'अथ मित्रं सखा सुहृ'दित्यमरः, तान् = लोकान् , व्रजन्तु = यान्तु ॥ ४० ॥

माता ने उत्तर देते हुए कहा--

विलास—आज क्या खांय ऐसा कहनेवाले अर्थात् निर्धन अथवा आज जल्दी क्या ? कल शत्रुओं को जीतेंगे इस प्रकार कहनेवाले अर्थात् विलम्ब लगानेवाले लोगों के लोकों को शत्रु पावें और हमारे मित्र लोग आदर पानेवालों के लोकों में जाकर वसें ॥ ४० ॥

भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथाः ॥ ४१ ॥

**अन्वयः**—( त्वं ) भृत्यैः विहीयमानानां परपिण्डोपजीविनाम् असत्त्वानां कृपणानां वृत्तिं मा अनुवर्तिथाः ।

**अर्थः**—भृत्यैरिति । त्वं, भृत्यैः=दासैः 'भृत्ये दासेरदासेयदासगोप्यथ चेटका' इत्यमरः, विहीयमानानां = रहितानां, परपिण्डोपजीविनां परेषाम्=अन्येषां, पिण्डेन =अन्नेन, उपजीवन्तीति तच्छीलानाम् , असत्त्वानां = निर्बलानां, कृपणानां =दीनानां, वृत्तिं = जीवनं 'वृत्तिर्वर्तनजीवने' इत्यमरः, मा अनुवर्तिथाः = नानुसरेः ॥ ४१ ॥

विलास--तुम दासदासियों से हीन, दूसरों के अन्न से पलनेवाले, निर्धन तथा निर्बलों की जीविका को न ग्रहण करो ॥ ४१ ॥

अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ४२ ॥

**अन्वयः**—हे तात ! भूतानि पर्जन्यम् इव, देवाः शतक्रतुम् इव, ब्राह्मणाः तथा सुहृदः त्वाम् अनु जीवन्तु ।

**अर्थः**—अन्विति । हे तात !=हे पुत्र ! 'ततोऽनुकम्प्ये जनक' इति मेदिनी, भूतानि = प्राणिनः, पर्जन्यम् इव = वृष्टिम् इव, देवाः = अमराः 'अमरा निर्जरा देवा' इत्यमरः, शतक्रतुम् इव शतं क्रतवो यस्य तं शतं=शतसङ्ख्याकाः, क्रतवः = यज्ञाः 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतु'रित्यमरः, यस्य तथाभूतमिन्द्रमित्यर्थः तमिव, ब्राह्मणाः=द्विजाः, तथा = तद्वत् , सुहृदः = मित्राणि 'अथ मित्रं सखा सुहृ'दित्यमरः, त्वां = भवन्तम् , अनु = पश्चात् आश्रित्येत्यर्थः, जीवन्तु = जीवनं धारयन्तु ॥ ४२ ॥

विलास--हे पुत्र ! जिस प्रकार प्राणिमात्र मेघों तथा देवतागण इन्द्रका आश्रय लेते हैं उसी प्रकार ब्राह्मण और मित्र तुम्हारा आश्रय पाकर जीवित रहें ॥ ४२ ॥

**यमाजीवन्ति पुरुषं सर्वभूतानि सञ्जय ।**
**पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥ ४३ ॥**

**अन्वयः**—हे सञ्जय ! सर्वभूतानि पक्वं द्रुमम् इव यं पुरुषम् आसाद्य आजीवन्ति, तस्य जीवितम् अर्थवत् ( अस्ति ) ।

**अर्थः**—यमिति । हे सञ्जय ! = हे पुत्र, सर्वभूतानि सर्वाणि = सम्पूर्णानि च तानि भूतानि=जीवाः, पक्वं=पक्वफलैरवनतं, 'पचो वः' इति निष्ठातस्य वः, द्रुमम् इव = वृक्षम् इव 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः शालः पलाशी द्रुद्रुमागमा' इत्यमरः, यं पुरुषं=यं नरम् , आसाद्य=अवलम्ब्य, आजीवन्ति = जीविकां निर्वर्तयन्ति, तस्य=पुरुषस्य, जीवितं=जीवनम् , अर्थवत्=सार्थकं सफलमित्यर्थः, अस्ति ॥ ४३ ॥

विलास—**हे सञ्जय ! सभी प्राणी पके फलों से पूर्ण वृक्ष की भाँति जिस पुरुष का आश्रय लेकर जीवित रहते हैं उसका जीवन सफल है ॥ ४३ ॥**

**यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।**
**त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ४४ ॥**

**अन्वयः**—बान्धवाः त्रिदशाः शक्रस्य विक्रान्तैः इव यस्य शूरस्य विक्रान्तैः सुखम् एधन्ते, इह तस्य जीवितं साधु ।

**अर्थः**—यस्येति । बान्धवाः = बन्धवः, त्रिदशाः =सुराः 'त्रिदशा विबुधाः सुरा' इत्यमरः, शक्रस्य=दिवस्पतेः इन्द्रस्येत्यर्थः, 'जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पति'रित्यमरः, विक्रान्तैः इव=पराक्रमैः इव, यस्य शूरस्य=यस्य वीरस्य

विक्रान्तैः = पराक्रमैः सुखं = सुखपूर्वकं यथास्यात्तथा, एधन्ते = वर्धन्ते, इह = संसारे, तस्य=शूरस्य पुंसः, जीवितं=जीवनं, साधु=शोभनमस्ति ॥ ४४ ॥

विलास—बांधवगण जिस शूर के पराक्रमों से इन्द्र से देवताओं के समान सुख से उन्नति किया करते हैं उसका जीवन इस लोक में प्रशंसा पाता है ॥ ४४ ॥

स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्ति परत्र च शुभां गतिम् ॥ ४५ ॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुला-पुत्रानुशासने प्रथमोऽध्यायः ।

---

**अन्वयः**—यः मानवः स्वबाहुबलम् आश्रित्य अभ्युज्जीवति, सः लोके कीर्तिं परत्र च शुभां गतिं लभते ।

**अर्थः**—स्वबाहुबलमिति । यः, मानवः=मनुष्यः 'मनुष्या मानुषा मर्त्या मनुजा मानवा नरा' इत्यमरः स्वबाहुबलम् स्वस्य=आत्मनः, बाह्वो=भुजयोः 'भुजबाहू प्रवेष्टो दो'रित्यमरसिंहः, बलं=शक्तिः तत्, आश्रित्य=अवलम्ब्य, अभ्यु-ज्जीवति = सर्वतः ससुखं जीवति, सः=मानवः, लोके = संसारे, कीर्तिं = यशः 'यशः कीर्तिः समज्ञा चे'त्यमरः, परत्र च=प्रेत्य परलोकेऽपि, शुभां=पुण्यां, गतिं = दशां, लभते = प्राप्नोति ॥ ४५ ॥

इति श्रीजगन्नाथशास्त्रिहोशिङ्गनिर्मितायां 'लीला'ख्यायां विदुलो-पाख्यानव्याख्यायां प्रथमोऽध्यायः समाप्तः ।

---

विलास—जो पुरुष अपने बाहुबल का सहारा लेकर जीवन चलाता है, वह संसार में कीर्ति तथा परलोक में सद्गति को पाता है ॥ ४५ ॥

इति महाभारतीय उद्योगपर्वान्तर्गत विदुला-सञ्जय-संवाद के 'विलास'-नामक हिन्दीभाषानुवाद का प्रथम अध्याय समाप्त ।

---

## द्वितीयोऽध्यायः ।

विदुलोवाच--

अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ १ ॥

विदुला = सञ्जयमाता, उवाच = अब्रवीत् ।

**अन्वयः**—अथ ( त्वम् ) एतस्याम् अवस्थायां पौरुषं हातुम् इच्छसि ( चेत्, तर्हि ) अचिरात् इव निहीनसेवितं मार्गं गमिष्यसि ।

**अर्थः**—अथेति । अथ = अनन्तरं, त्व = भवान्, एतस्याम् = अस्याम्, अवस्थायां = दशायां, पौरुषं = पुरुषार्थं सामर्थ्यमित्यर्थः, हातुं = त्यक्तुम्, इच्छसि = अभिलषसि, चेत् = यदि, तर्हि, अचिरात् इव = शीघ्रमेव, अत्र एवार्थे इवशब्दः, निहीनसेवितं निहीनैः = दरिद्रैरथवा नीचैः, सेवितं = जुष्टं, मार्गं = पन्थानम् 'अयनं वर्त्ममार्गाध्वपन्थानः' इति कोशः, गमिष्यसि = यास्यसि आश्रयिष्यसीत्यर्थः ॥ १ ॥

विदुलाने कहा--

विलास--अब यदि इस दशा ( बुरी अवस्था ) में तुम अपनी वीरता को छोड़ना चाहो तो तुम्हें शीघ्र ही नीचों से अपनाए हुए रास्ते पर जाना पड़ेगा ॥ १ ॥

**यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् ।**
**क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥ २ ॥**

**अन्वयः**—जीविताकांक्षी यः क्षत्रियः यथाशक्ति विक्रमात् तेजः न दर्शयति, ( सन्तः ) तं स्तेनः इति एव विदुः ।

**अर्थः**—य इति । जीविताकांक्षी जीवितं = जीवनम्, आकांक्षते=इच्छति असौ, यः, क्षत्रियः=क्षत्रियजातिपुरुषो राजेत्यर्थः, यथाशक्ति=शक्तिमनतिक्रम्येत्यव्ययीभावः समासः, स्वशक्त्यनुसारमित्यर्थः, विक्रमात्=पराक्रमात्, तेजः = कोशदण्डजमोजः, न दर्शयति=न प्रदर्शयति, सन्तः = सत्पुरुषाः, तं = राजानं स्तेनः = चौरः 'चौरैकागारिकस्तेने'त्यमरः, इति एव=इत्थमेव, विदुः=जानन्ति 'विदो लटो वा' इति वर्तमानार्थे उस्प्रत्ययः ॥ २ ॥

विलास—जीवित रहने की इच्छा रखनेवाले जो क्षत्रिय अपनी शक्तिभर पौरुष के द्वारा तेज नहीं दिखाता उसे विद्वान् लोग चोर अर्थात् अपने आपका शत्रु यह समझते हैं ॥ २ ॥

**अथवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।**
**नैव सम्प्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ३ ॥**

**अन्वयः**—भेषज मुमूर्षुम् इव अथवन्ति उपपन्नानि गुणवन्ति च वाक्यानि त्वां नैव सम्प्राप्नुवन्ति ।

**अर्थः**—अर्थवन्तीति । भेषजम=औषधिः, मुमूर्षुं=मरणासन्नम् इव, अथवन्ति = प्रयोजनवन्ति कार्यसम्पादनसफलानीत्यर्थः, उपपन्नानि = उचितानि गुणवन्ति=लाभप्रदानि च, वाक्यानि = उपदेशवचनानि, त्वां = भवन्तं, नैव संप्राप्नुवन्ति = रोचन्ते ॥ ३ ॥

विलास—मुमूर्षु ( मरनेवाले ) को जिस प्रकार औषधि प्राप्त नहीं होती उस प्रकार तात्पर्य से भरे उचित और गुणकारक वचन तुम्हें नहीं ही प्राप्त होते हैं अर्थात् अच्छे वचन तुम्हें नहीं भाते ॥ ३ ॥

**सन्ति वै सिन्धुराजस्य सन्तुष्टा न तथा जनाः ।**
**दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः ॥ ४ ॥**

**अन्वयः**—सिन्धुराजस्य जनाः तथा सन्तुष्टाः न वै सन्ति, मूढाः दौर्बल्यात् व्यसनौघप्रतीक्षिणः आसते ।

**अर्थः**—सन्तीति । सिन्धुराजस्य = सिन्धुदेशाधिपस्य, जनाः = आश्रिताः मनुष्याः, तथा=तेन प्रकारेण यथोचितमित्यर्थः, सन्तुष्टाः=अनुरागिणः, न वै= नैव, अत्र एवार्थे वैपदम्, सन्ति = वर्तन्ते, किन्तु ते, मूढाः = किंकर्तव्यशून्या अज्ञाः 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशा' इत्यमरः, दौर्बल्यात् = शक्त्यभावात्, व्यसनौघप्रतीक्षिणः व्यसनानां = विपदां 'व्यसनं विपदि भ्रंश' इति कोशः, ओघः= समूहः, तं प्रतीक्षन्ते इति तच्छालिनः सन्तः, आसते=तिष्ठन्तीति ॥ ४ ॥

विलास—सिन्धुराज के पास लोग वैसे सन्तुष्ट नहीं ही हैं, किन्तु वे मूर्ख अपनी दुर्बलता के कारण उसपर आने वाली विपत्तियों की प्रतीक्षा में हैं ॥ ४ ॥

**सहायोपचितिं कृत्वा व्यवसाय्य ततस्ततः ।**
**अनुदुष्येयुरपरेऽपश्यन्तस्तव पौरुषम् ॥ ५ ॥**

**अन्वयः**—तव पौरुषम् अपश्यन्तः अपरे ततस्ततः व्यवसाय्य सहायोपचितिं कृत्वा अनुदुष्येयुः ।

**अर्थः**—सहायोपचितिमिति । तव = ते, पौरुषम् = उद्योगम्, अपश्यन्तः= अनवलोकयन्तः, अपरे = स्वकीयाः केचन, ततस्ततः = कुतश्चिदपि, व्यवसाय्य = कृत्यर्थं चेष्टित्वा, सहायोपचितिं = सहायसम्पत्तिं, कृत्वा=विधाय, अनुदुष्येयुः= शत्रुपक्षमाश्रयेयुः ॥ ५ ॥

विलास—प्रयत्न-हीन होने के कारण तुम्हारी वीरता को न देखते हुए कुछ अपने लोग उसकी विशेष सहायता कर और उससे अपना व्यवसाय ( जीविकोपाय ) चला कर शत्रुपक्ष का आश्रय लेंगे ॥ ५ ॥

**तैः कृत्वा सह सङ्घातं गिरिदुर्गालयं चर ।**
**काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ॥ ६ ॥**

**अन्वयः**—तैः सह सङ्घातं कृत्वा काले व्यसनम् आकांक्षन् ( त्वं ) गिरि-दुर्गालयं चर अयम् अजरामरः नैव ।

**अर्थः**—तैरिति । तैः=स्वकीयैः, सह=सार्धं 'सार्धं साकं सत्रा समं सहे'त्यमरः,

सङ्घातम्=ऐक्यं, कृत्वा=विधाय, काले=उचितावसरे व्यसनं=भ्रंशम् , आकांक्षन्= इच्छन् , त्वं, गिरिदुर्गालयं गिरयश्च = शैलाश्च, 'अद्रिगोत्रगिरिग्रावाचलशैल-शिलोच्चया' इत्यमरः, दुर्गाणि च=दुर्गमस्थानानि च तान्येव आलयः=गृहं 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इत्यमरः, त, चर=कुरु गिरिदुर्गाश्रयेण तिष्ठन् कालं प्रतीक्षस्वेत्यर्थः, अयं=शत्रुश्च , अजरामरः=वार्धक्यमृत्युरहितः, नैव=नह्येव, वर्तते ॥ ६ ॥

विलास—उन लोगों के साथ एकता कर अवसर आने पर उसके नाश की इच्छा रखते हुए तुम पर्वत-दुर्गमें घूमते रहो, क्योंकि यह तुम्हारा शत्रु भी अजर और अमर नहीं ही है ॥ ६ ॥

**सञ्जयो नामतश्च त्वं न च पश्यामि तत्त्वयि ।**
**अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ७ ॥**

**अन्वयः**—हे मे पुत्र ! त्वं नामतः च सञ्जयः ( असि ), तत् च त्वयि न पश्यामि, अन्वर्थनामा भव, व्यर्थनामकः मा भव ।

**अर्थः**—सञ्जय इति । हे मे पुत्र=हे मम तनूज !, त्वं=भवान् , नामतः च= केवलं नाम्नैव, एवार्थेऽत्र चकारः, सञ्जयः = साधु विजयशीलः, असि, तत् च= विजयशीलत्वं च, त्वयि=भवति, न प श्यामि = न प्रेक्षे, अतः, अन्वर्थनामा= सार्थनामा विजयीत्यर्थः, भव, व्यर्थनामकः=अर्थशून्यनामधारी विपरीतार्थनाम-धारी वा, मा भव = न भूयाः ॥ ७ ॥

विलास—हे मेरे पुत्र ! तुम नाम से तो संजय (विजयी) हो पर तुममें वह विजय पानेका यत्न नहीं देख पड़ता, अपने नाम को सार्थक बनाओ, निरर्थक नहीं ॥ ७ ॥

**सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत् ।**
**अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥ ८ ॥**

**अन्वयः**—सम्यग्दृष्टिः महाप्राज्ञः ब्राह्मणः बालं त्वां ( वीक्ष्य ) अयं महत् कृच्छ्रं प्राप्य पुनः वृद्धिं गमिष्यति (इति) अब्रवीत् ।

**अर्थः**—सम्यग्दृष्टिरिति । सम्यग्दृष्टिः सम्यक्=साध्वी, दृष्टिः = भूतभविष्यद्विचारदर्शनसरणिर्यस्य तादृशः, महाप्राज्ञः=विशेषविद्वान् , ब्राह्मणः=कश्चिद् विप्रः, बालं = बाल्यावस्थायां वर्तमानं, त्वा=भवन्तं, वीक्ष्य=निरीक्ष्य, अयम्= एष बालकः, महत्=भूरि, कृच्छ्रं =कष्टं 'स्यात्कष्टं कृच्छ्रमाभील'मित्यमरः, प्राप्य= आसाद्य, पुनः = भूयः, वृद्धिं = परमामुन्नतिं, गमिष्यति=प्राप्स्यतीति, अब्रवीत्= अकथयत् ॥ ८ ॥

विलास--अच्छी तरह सोच विचार कर कहने वाले बड़े विद्वान ब्राह्मण ने बाल्य काल में तुम्हें ( देख कर मुझसे ) कहा था-कि यह महान् सङ्कट को पाकर फिर उन्नति को पावेगा ॥ ८ ॥

**तस्य स्मरन्ती वचनमाशंसे विजयं तव ।**
**तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥ ९ ॥**

**अन्वयः**—तस्य वचनं स्मरन्ती ( अहं ) तव विजयम् आशंसे, तस्मात् हे तात, त्वां ब्रवीमि, पुनः पुनः वक्ष्यामि च ।

**अर्थः**—तस्येति । तस्य = विदुषो ब्राह्मणस्य, वचनं = कथनं, स्मरन्ती = स्मृतिं नयन्ती, अहं, तव = ते, विजय = जयम् , आशंसे = इच्छामि, तस्मात् = कारणात् , हे तात = हे पुत्र, त्वां = भवन्तं, ब्रवीमि = कथयामि, पुनः पुनः = मुहुः 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समा' इत्यमरः, वक्ष्यामि च = कथयिष्यामि च ॥ ९ ॥

विलास—उस ब्राह्मण के वचन को स्मरण करती हुई मैं तुम्हारी जय चाहती हूं, हे बेटा ! इसलिये तुमसे कहती हूं और बार बार कहूंगा ॥ ९ ॥

**यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।**
**तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ १० ॥**

**अन्वयः**—यस्य अर्थाभिनिर्वृत्तौ हि परे आप्यायिताः भवन्ति, नयेषु अर्थानुसारिणः तस्य अर्थसिद्धिः नियता ।

**अर्थः**—यस्येति । यस्य = यस्य राज्ञः, अर्थाभिनिर्वृत्तौ अर्थानां = प्रयोजनानाम् , 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः, अभिनिर्वृत्तिः = निष्पत्तिः तस्यां, हि = निश्चयेन, परे = तत्सम्बन्धिनः, आप्यायिताः = भृशं सन्तुष्टाः, भवन्ति, नयेषु=नीतिमार्गेषु, अर्थानुसारिणः=सम्पदभिलाषुकस्य, तस्य= राज्ञः, अर्थसिद्धिः=कार्यसिद्धिः, नियता=निश्चिता, अस्तीति शेषः ॥ १० ॥

विलास—जिसके कार्य समाप्त होने पर तत्सम्बन्धी सन्तुष्ट होते हैं, नीतिपूर्वक अर्थानुसरण करने वाले उस मनुष्य की कार्यसिद्धि निश्चित ही है ॥ १० ॥

**समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय ।**
**एवं विद्वान् युद्धमना भव मा प्रत्युपाहरः ॥ ११ ॥**

**अन्वयः**—हे सञ्जय ! पूर्वेषां मम ( च ) समृद्धिः असमृद्धिः वा ( अवश्यम्भाविनी ), एवं विद्वान् ( त्वं ) युद्धमनाः भव, मा प्रत्युपाहरः ।

**अर्थः**—समृद्धिरिति । हे सञ्जय=हे पुत्र ! पूर्वेषां=पित्रादीनां, मम च= मेऽपि च, समृद्धिः=जय उन्नतिर्वा, असमृद्धिः=पराजयोऽवनतिर्वा, अवश्यं-

भाविनी=निश्चयेन भवित्री, एवम्=इति, विद्वान्=जानानः, ट , युद्धमनाः युद्धे = प्रधने सङ्ग्राम इत्यर्थः, 'युद्धमायोधनं जन्य प्रधनं प्रविदारण'मित्यमरो युद्धप र्यायेषु, मनः=चेतो यस्य सः 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन इति कोशः, युद्धायोद्यत इत्यर्थः, भव=भूयाः, मा=नैव, प्रत्युपाहरः=युद्धोप संहारमकार्षीः ॥ ११ ॥

विलास—हे सञ्जय ! पूर्वजों की और मेरी उन्नति या अवनति या जय-पराज अवश्य होंगे इस प्रकार समझते हुए तुम युद्ध में चित्त लगाओ, युद्ध को न समेटो॥१

**नातः पापीयसीं काश्चिदवस्थां शम्बरोऽब्रवीत् ।**
**यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ १२ ॥**

**अन्वयः**—शम्बरः यत्र भोजनम् प्रातः न, अद्य नैव प्रतिदृश्यते, अत पापीयसीं न काञ्चित् अवस्थाम् अब्रवीत् ।

**अर्थः**—नेति । शम्बरः=तदाख्यो नीतिज्ञः, यत्र=यस्मिन् , कुले गृहे व भोजनम्=अशनं, प्रातः=प्रातःकाले न=नास्त्येव, अद्य=अद्यतने समस्ते दिने, नै प्रतिदृश्ते=दृक्पथं नैव गच्छति, अतः=अस्मात् परं, पापीयसीं=दुर्गतिपूर्णां, काञ्चित्=न कामपि, अवस्थां=स्थितिम् , अब्रवीत्=अकथयत् ॥ १२ ॥

विलास—जहां न आज और न प्रातःकाल भोजन (खाना) दिखाई दे उस बढ़कर बुरी कोई दशा नहीं-ऐसा शंबर ने कहा है ॥ १२ ॥

**पतिपुत्रवधादेतत् परमं दुःखमब्रवीत् ।**
**दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥ १३ ॥**

**अन्वयः**—( स एव ) एतत् पतिपुत्रवधात् परमं दुःखम् अब्रवीत् , दारिद्र्यम् इति यत् प्रोक्तम् , तत् पर्यायमरणम् अस्ति ।

**अर्थः**—पतिपुत्रवधादिति । स एव=शम्बर एव, एतत्=भोजनाभावरूप वस्थानं, प्रतिपुत्रवधात् पतिश्च=दयितश्च, पुत्रश्च=सुतश्च तयोः वधः=हत्य मृत्युरित्यर्थः तस्मात् , परमम्=अधिकं, दुःख=दुःखकरम् , अब्रवीत्=अब्रूत, हि यस्मात्कारणात् , दारिद्र्यं=दुर्गतत्वं 'दरिद्रो दुर्गतोऽप्यसा'वित्यमरः, इति=इत्य यत् , प्रोक्तं=कथितं, तत्=दारिद्र्यम् , पर्यायमरणं पर्यायेण=क्रमेण नामान्त रेणेत्यर्थः, मरण=मृत्युः, अस्ति ॥ १३ ॥

विलास—उन्ही शम्बरने यह भी कहा है कि—यह अवस्था पति तथा पुत्र मरण से भी अधिक दुःखद है, दारिद्र्य (निर्धनता) जो कहा जाता है वह तो मृत्यु का दूसरा नाम है ॥ १३ ॥

**अहं महाकुले जाता ह्रदाद् ह्रदमिवागता ।**
**ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ १४ ॥**

**अन्वयः**—ह्रदात्-ह्रदम् इव अहं महाकुले जाता आगताऽपि, ( अत्र ) र्वकल्याणी भर्त्रा परमपूजिता ईश्वरी च ( अभवम् ) ।

**अर्थः**—अहमिति । ह्रदात्=सरसः, ह्रदम् इव=सरोन्तरमिव, अहं=त्वन्माता, हाकुले=श्रेष्ठवंशे, जाता = उत्पन्ना, आगताऽपि=ऊढा सती महाकुल एव म्प्राप्तास्मि, अत्र=अस्मिन् कुले च, सर्वकल्याणी सर्वेषां = समेषां वश्यादीनां, ल्याणं=शुभं 'कल्याणं मङ्गलं शुभम्' इत्यमरः, अस्ति यस्यास्तथाभूता सती, र्त्रा=पत्या 'धवः प्रियः पतिर्भर्ता' इति कोशः' परमपूजिता=अत्यन्तमाहता, श्वरी=स्वामिनी च अभवम् ॥ १४ ॥

विलास—एक सरोवर से दूसरे सरोवर की भाँति मैं एक श्रेष्ठ कुल में उत्पन्न हुई ौर दूसरे श्रेष्ठ कुल में आ पहुंची, वहां पति से आदर पाती और सब सुख से पूर्ण ती हुई स्वामिनी हो गई ॥ १४ ॥

**महार्हमाल्याभरणां सुमृष्टाम्बरवाससम् ।**
**पुरा हृष्टः सुहृद्वर्गो मामपश्यत् सुहृद्गताम् ॥ १५ ॥**

**अन्वयः**—पुरा हृष्टः सुहृद्वर्गः सुहृद्गतां मां महार्हमाल्याभरणां सुमृष्टाम्बर-ाससम् अपश्यत ।

**अर्थः**—महार्हमाल्याभरणामिति । पुरा = पत्यू राज्यकाले, हृष्टः=मुदितः, हृद्वर्गः=आप्तसमूहः, सुहृद्गतां=स्वीयजनेषु समुपस्थितां, मां=मा, महार्हमाल्या-रणां माल्यं च आभरणं च माल्याभरणे महार्हे माल्याभरणे यस्याः सा तां ल्य=माला 'माल्यं मालास्त्रजा'वित्यमरः, आभरणं=भूषणं, महार्हे=बहुमूल्ये, ल्याभरणे यस्यास्तादृशीं, सुमृष्टाम्बरवाससम् सुमृष्टे=अत्युत्कटे, अम्बरवाससी गन्धिद्रव्यमौशीरादि परिधानाच्छादनादिवस्त्रं च यस्यास्ताम्, अपश्यत्=अवा-ोकयत् ॥ १५ ॥

विलास—पहले समय में परम प्रसन्न मेरा मित्रवर्ग मित्रमण्डली में पहुँची हुई े बहु-मुल्य माला और आभूषण से युक्त सुगन्धित द्रव्य तथा सुन्दर वस्त्र पहिने ! ही देखा करता था ॥ १५ ॥

**यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बलाम् ।**
**न तदा जीवितेनार्थो भविता तव सञ्जय ॥ १६ ॥**

**अन्वयः**—सञ्जय ! यदा ( त्वं ) मां भार्यां चैव भृशदुर्बलां द्रष्टासि, तदा व जीवितेन अर्थः न भविता ।

**अर्थः**—यदेति । सञ्जय = पुत्र, यदा=यस्मिन् काले, स्वस्थेन चेतसेत्यूह्यम् मां = मा, भार्यां चैव = जायां पत्नीमपि च 'भार्या जाये'त्यमरः, भृशदुर्बल भृशम् = अत्यन्तं, दुर्बलां = सर्वतोभावेन हीनां, द्रष्टासि=अवलोकयिष्यसि, दृशिर् प्रेक्षणे-इत्यस्माल्लुटि मध्यमपुरुषैकवचने रूपमिदम्, तदा=तत्काले, तव = ते जीवितेन = कार्याक्षमेण जीवनेन, अर्थः=प्रयोजनम् 'अर्थोऽभिधेयरैवस्तुप्रयोजन निवृत्तिषु' इति कोशः, न भविता=न भविष्यति, पूर्ववद् भूधातोर्लुटि प्रथमपुरुषै कवचनम् ॥ १६ ॥

विलास—हे सञ्जय! जब मुझे और अपनी स्त्री को अत्यन्त दुर्बल भई देखोगे, त तुम्हारे जीने से लाभ न होगा अर्थात् तुम्हारे रहते यदि हम दोनों दुबली हो जायँ तं तुम्हारा जीवन किस काम का ॥ १६ ॥

**दासकर्मकरान् भृत्यानाचार्यर्त्विक्पुरोहितान् ।**
**अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ १७ ॥**

**अन्वयः**--अस्मान् अवृत्त्या प्रजहतः दासकर्मकरान् भृत्यान् आचार्यर्त्वि क्पुरोहितान् दृष्ट्वा ते जीवितेन किम्? ।

**अर्थः**—दासकर्मकरानिति । अस्मान् = नः, अवृत्त्या = जीविकोपलब्ध्य भावेन, प्रजहतः=त्यागं कुर्वतः, दासकर्मकरान् दासवत्=क्रीतकिङ्करवत्, कर्म = कार्यं कुर्वन्तीति तान्, भृत्यान् = सेवकान्, आचार्यर्त्विक्पुरोहितान् आचार्यश्च ऋत्विजश्च पुरोहितश्चेति आचार्यर्त्विक्पुरोहिताः तान् आचार्यः = यज्ञादिकर्मोप देष्टा, ऋत्विजः=होमादिकर्त्तारः, पुरोहितः=पुरोधाः 'पुरोधास्तु पुरोहित' इत्यमरः, तान्, दृष्ट्वा=विलोक्य, ते=तव, जीवितेन=जीवनेन, किं=किं प्रयोजनम् ॥ १७ ॥

विलास—जीविका के अभाव में हम लोगों को छोड़ने वाले दास-दासी, नौकर चाकर, आचार्य, ऋत्विक्, पुरोहितों को देख कर तुम्हारे जीवन से क्या लाभ? ॥ १७ ॥

**यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा ।**
**श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥ १८ ॥**

**अन्वयः**--पुरा यथा अद्य तव श्लाघनीयं यशस्य च कृत्यं यदि न पश्या मि, (तर्हि) मे हृदयस्य शान्तिः का ।

**अर्थः**—यदीति । पुरा यथा=पूर्वकालमिव, अद्य = वर्तमानसमये, तव=ते, श्लाघनीयं = प्रशंसनीयं, यशस्यं = कीर्तिकरं च, कृत्यं = कार्यं पराक्रममित्यर्थः, न पश्यामि = नावलोकयामि, तर्हि, मे = मम, हृदयस्य = चेतसः, शान्तिः=शर्म, का = कीदृशी, नैवेत्यर्थः ॥ १८ ॥

Library Sri Pratap College, Srinagar.

विलास—यदि मैं पूर्व की तरह प्रशंसनीय और यशस्कर आज तुम्हारा कार्य पराक्रम ) नहीं देखती तो मेरे हृदय को शान्ति कैसे हो ॥ १८ ॥

नेति चेद्‌ ब्राह्मणं ब्रूयां दीर्येत हृदयं मम ।
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥ १९ ॥

**अन्वयः**—( अहं ) ब्राह्मणं न इति ब्रूयां चेत् ( तर्हि ) मम हृदयं दीर्येत, हि न अहं न मे भर्ता च ब्राह्मणं नेति उक्तवान् ।

**अर्थः**—नेतीति । अहं, ब्राह्मणं=याचकं विप्रं 'विप्रश्च ब्राह्मणोऽसौ षट्कर्मा' इत्यमरः, न इति=दातुं नास्ति मत्समीपे इति, ब्रूयां चेत्=यदि कथयेयं, तर्हि, मम=मे, हृदयं=चित्तं, दीर्येत=शीर्येत, हि=यस्मात् कारणात , न अहं, न मे=मम, भर्ता च=प्रियोऽपि, ब्राह्मणं=विप्रं, नेति = नास्तीति, उक्तवान् = अकथयम् । विदुलापक्षे उक्तवानित्यस्य लिङ्गविपरिणामेणान्वये उक्तवतीति ज्ञेयम् ॥ १९ ॥

विलास--आज यदि याचक ब्राह्मण को 'नहीं' का शब्द कह दूँ तो मेरा हृदय टूक २ हो जायगा, न मैंने, न मेरे पति ने ब्राह्मण को नहीं ऐसा वचन कहा ॥ १९ ॥

वयमाश्रयणीयाः स्म न श्रोतारः परस्य च ।
साऽन्यमासाद्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ २० ॥

**अन्वयः**—आश्रयणीयाः वयं परस्य च श्रोतारः न स्म, अन्यम् आसाद्य जीवन्ती सा ( अहं ) जीवितं परित्यक्ष्यामि ।

**अर्थः**—वयमिति । आश्रयणीयाः = अन्यैराश्रयितुं योग्याः अन्येभ्य आश्रयं दातुं समर्था इत्यर्थः, वयं, परस्य = अन्यस्य आज्ञाया इति शेषः, श्रोतारः = आकर्णयितारः, न स्म = नाभवामः स्म, अन्यं = परम् , आसाद्य = अवलम्ब्य आश्रित्येत्यर्थः, जीवन्ती = प्राणान् धारयन्ती, सा = पूर्वोक्ता, अहं, जीवितं=जीवनं प्राणानित्यर्थः, परित्यक्ष्यामि = मोक्ष्यामि ॥ २० ॥

विलास—हम लोग आश्रय ( जीविका ) देने वाले थे दूसरे की आज्ञा सुनने वाले नहीं, उसी मुझको दूसरे का आश्रय लेकर जीना पड़ा तो मैं जीवन त्याग दूँगी अर्थात् प्राण दे दूंगी ॥ २० ॥

अपारे भव नः पारमप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान् सञ्जीवयस्व नः ॥ २१ ॥

**अन्वयः**—( त्वम् ) अपारे नः पारं भव, अप्लवे नः प्लवः भव, अस्थाने स्थानं कुरुष्व, मृतान् नः सञ्जीवय ।

**अर्थः**—अपार इति । त्वं = भवान् , अपारे = पाररहितेऽस्मिन् विपत्सागरे, नः = अस्माकं, पारं = परतीरं सहायकमित्यर्थः, भव, अप्लवे=प्लवहीने च

पूर्वोक्तोदधौ, नः अस्माकं, प्लवः=उडुपं, भव, 'उडुपं तु प्लवः कोल' इत्यमरः, अस्थाने=स्थातुमनर्हे च भूपृष्ठे, स्थानं=स्थित्यनुकूलं भूतलं, कुरुष्व=कुरु, एवमित्यध्याहार्यम्, मृतान्=दारिद्र्येण प्राप्तमृत्युतुल्यान्, नः=अस्मान् सञ्जीवयस्व=जीवय ॥ २१ ॥

विलास—बिना पार के इस विपद्-सागर में तुम पार (तीर) बनो, बिना नाव में छोटी-सी नाव हो जाओ, जहाँ स्थान न हो वहाँ स्थान (ठहरने के वास्ते जगह अर्थात् आधार) बना लो, इस प्रकार हम मृतकों (मुर्दों) को जिलाओ ॥ २१ ॥

**सर्वे ते शत्रवः शक्या न चेज्जीवितुमर्हसि ।**

**अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥ २२ ॥**

**अन्वयः**—(त्वं) चेत् जीवितुम् अर्हसि (तत्) सर्वे शत्रवः ते (जेतुं) शक्याः, अथ न चेत् ईदृशीं क्लीबां वृत्तिम् अभ्युपपद्यसे ।

**अर्थः**—सर्व इति । त्वं=भवान्, चेत्=यदि, जीवितं=प्राणान् धारयितुम्, अर्हसि=आत्मानं योग्यं मन्यसे, तत्=तर्हि, सर्वे=सकलाः, शत्रवः=रिपवः, ते=तव त्वयेत्यर्थः, जेतुं शक्याः=अवश्यं जेतव्या एव, अथ=अनन्तरं, न चेत्=न तु, ईदृशीं=पूर्वोक्तां हीनां, क्लीबां=नपुंसकोपास्यां 'क्लीबः पण्डो नपुंसके' इत्यमरः, वृत्तिं=जीवनं 'वृत्तिर्वर्तनजीवने' इत्यमरः, अभ्युपपद्यसे=प्राप्स्यसीत्यर्थः ॥ २२ ॥

विलास—यदि जीवित रहना चाहते हो तो तुम्हें सभी शत्रुओं को जीतना पड़ेगा, और नहीं तो ऐसी नपुंसक (नीच) वृत्ति को प्राप्त होगे ॥ २२ ॥

**निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।**

**अन्वयः**—हतमनाः निर्विण्णात्मा (त्वम्) एतां पापजीविकां मुञ्च ।

**अर्थः**—निर्विण्णात्मेति । हतमनाः हतम्=अनुद्योगात् उत्साहरहितं, मनः=हृदयं यस्य सः, अत एव निर्विण्णात्मा निर्विण्णः=अत्यन्तं खिन्नः, आत्मा=ज्ञानाधिकरणं यस्य तथाभूतः, त्वं=भवान्, एताम्=इमां शूरपुरुषानुचितां, पापवृत्तिं=दुष्टजीविकां, मुञ्च=त्यज ।

विलास—अनन्तर चित्त के मर (दब) जाने से दुःखी आत्मा वाले तुम इस नीच बुरी जीविका का त्याग कर दो ॥

**एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ २३ ॥**

**इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।**

**माहेन्द्रं च गृहं लेभे लोकानां चेश्वरोऽभवत् ॥ २४ ॥**

**अन्वयः**—शूरः एकशत्रुवधेन एव विश्रुतिं गच्छति, इन्द्रः वृत्रवधेन एव

महेन्द्रः समपद्यत, माहेन्द्रं गृहं च लेभे, लोकानाम् ईश्वरः च अभवत् ।

**अर्थः**—एकशत्रुवधेनेति । शूरः = वीरः 'शूरो वीरश्च विक्रान्त' इत्यमरः, एकशत्रुवधेन एकश्चासौ शत्रुश्च एकशत्रुः तस्य च वधः तेन एकः = मुख्यः 'एके मुख्यान्यकेवला' इत्यमरः, स चासौ शत्रुश्च=वैरी च, तस्य वधः=मारणं तेनैव, विश्रुतिं = विख्यातिं प्रसिद्धिमित्यर्थः, गच्छति = याति लभत इत्यर्थः, उदाहरति तदेव–इन्द्रः = मघवा 'इन्द्रो मरुत्वान् मघवे'त्यमरः, वृत्रवधेन वृत्रस्य = वृत्रासुरस्य, वधः=मारणं तेनैव, महेन्द्रः=देवाधिपतिः, समपद्यत=बभूव माहेन्द्रं= महेन्द्रसम्बन्धि, गृहं = गेहं गृहिणीं च ''शची सैव तिष्ठति, शतं क्रतून् कृत्वा कालान्तरेण राजान्तर इन्द्रपदं प्राप्नोती''ति कथाऽनुसन्धेया, लेभे=अलभत प्राप्तवान् , लोकानां = भुवनानां जनानां च 'लोकस्तु भुवने जने' इति कोशः, ईश्वरः = स्वामी च, अभवत् = अभूत् ॥ २४ ॥

विलास—शूर पुरुष एक ही मुख्य शत्रु के वध ( हत्या ) से प्रसिद्ध होता है, इन्द्र वृत्रासुर को मारने से ही महेन्द्र पदवी को पा गया और महेन्द्र के गृह तथा गृहिणी को भी पा गया और लोकों का स्वामी हुआ ॥ २४ ॥

**नाम विश्राव्य वै संख्ये शत्रूनाहूय दंशितान् ।**
**सेनाग्रं चापि विद्राव्य हत्वा वा पुरुषं वरम् ॥ २५ ॥**
**यदैव लभते वीरः सुयुद्धेन महद्यशः ।**
**तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥ २६ ॥**

**अन्वयः**—वीरः सङ्ख्ये यदा एव नाम वै विश्राव्य दंशितान् शत्रून् आहूय सेनाग्रम् अपि विद्राव्य च वरं पुरुषं हत्वा वा सुयुद्धेन महत् यशः लभते, तदा एव अस्य शत्रवः प्रव्यथन्ते विनमन्ति च ।

**अर्थः**—नामेति, यदेति च । वीरः=शूरः पुरुषः, संख्ये = युद्धे 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् । मृधमास्कन्दनं संख्यं समीकं साम्परायिकम् ॥' इति युद्धपर्यायेष्वमरः, यदा एव=यस्मिन् काले एव, नाम = स्वं नामधेयं 'नामधेयं च नाम च' इति कोशः, वै = इति पादपूरणे, विश्राव्य = उद्घुष्य श्रावयित्वा, दंशितान् = सन्नद्धान् 'सन्नद्धो दंशितस्तथा' इत्यभिधानरत्नमालायां हलायुधः, शत्रून् = रिपून , आहूय = युद्धार्थमाह्वानं कृत्वा, सेनाग्रं सेनायाः=सैन्यस्य, अग्रम्= अग्रभागः तदपि, विद्राव्य=इतस्ततः कृत्वा पलाय्य वा च, वरं=श्रेष्ठं विशिष्टं योधमित्यर्थः, पुरुषं=नरं, हत्वा = निहत्य वा, सुयुद्धेन=युद्धकौशलेन, महत्–विशालं, यशः=कीर्तिं, लभते=प्राप्नोति, तदा एव = तत्काल एव, अस्य = वीरपुरुषस्य,

शत्रवः=रिपवः, प्रव्यथन्ते=भृशं पीडयन्ते, विनमन्ति=विशेषेण नम्रा भवन्ति च ॥

विलास—वीर पुरुष जभी युद्धभूमि में अपना नाम सुनाकर आँख पर चढे और सज्ज शत्रुओंको ललकार कर सेना के अग्रिम भाग को तितर बितर कर या भगाकर किंवा शत्रुपक्षीय किसी एक प्रधान योद्धा को मारकर अच्छी वीरता से बड़ा यश पाता है, तभी उसके शत्रु बहुत दुःखी होते हैं और दब भी जाते हैं ॥ २५-२६ ॥

त्यक्त्वात्मानं रणे दक्षं शूरं कापुरुषा जनाः ।
अवशास्तर्पयन्ति स्म सर्वकामसमृद्धिभिः ॥ २७ ॥

**अन्वयः**—कापुरुषाः जनाः अवशाः (सन्तः) आत्मानं त्यक्त्वा रणे दक्षं शूरं सर्वकामसमृद्धिभिः तर्पयन्ति स्म ।

**अर्थः**—त्यक्त्वेति । कापुरुषाः=कातराः, जनाः = पुरुषाः, अवशाः सन्तः= असामर्थ्येन निरुपायाः सन्तः, आत्मानं = शरीरं, त्यक्त्वा = विहाय, रणे=समरे 'अस्त्रियां समरानीकरणाः कलहविग्रहा'वित्यमरः, दक्षं = चतुरं 'दक्षे तु चतुर-पेशलपटव' इत्यमरः, शूरं = वीरं पुरुषं, सर्वकामसमृद्धिभिः सर्वे च ते कामाश्च सर्वकामाः तेषां समृद्धयः ताभिः सर्वे = सकलाः, ये कामाः = अभिलाषाः 'कामोऽभिलाष' इत्यमरः, तेषां समृद्धयः = सम्पदाधिक्यं ताभिः, तर्पयन्ति=प्रसादयन्ति, स्मेति पादपूरणे ॥ २७ ॥

विलास—कायर लोग निरुपाय हो लडाई में शरीर त्याग कर युद्ध में निपुण शूर को सभी इच्छित सम्पत्तियों से प्रसन्न करते हैं ॥ २७ ॥

राज्यं चाप्युग्रविभ्रंशं संशयो जीवितस्य वा ।
न लब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥ २८ ॥

**अन्वयः**—राज्यं चापि उग्रविभ्रंशं (भवतु), जीवितस्य संशयो वा (अस्तु), साधवः लब्धस्य शत्रोः शेषं न वै कुर्वन्ति हि ।

**अर्थः**—राज्यमिति । राज्यं चापि=मण्डलाधिपत्यमपि, उग्रविभ्रंशम् उग्रः= भयानकः, विभ्रंशः=अधःपातः यस्य तत् , भवतु, जीवितस्य=जीवनस्य, संशयो वा=सन्देहो वा, अस्तु, साधवः=सज्जनाः 'सभ्यसज्जनसाधव' इत्यमरः, लब्धस्य= प्राप्तस्य जितस्येत्यर्थः, शत्रोः=वैरिणः, शेषं=पुनः स्वल्पेन विभवेनाऽवस्थापनं, न वै = नैव, कुर्वन्ति = कुर्वते, हि = पादपूरणे ॥ २८ ॥

विलास--राज्य भले ही भयानक पतन की ओर जाय या जीवन का सन्देह ( मृत्यु-सम्भावना ) भले ही हो पर सज्जन जीते हुए शत्रु का शेष ( थोडी भी सम्पदा दे उसको रखना ) नहीं ही करते ॥ २८ ॥

स्वर्गद्वारोपमं राज्यमथवाऽप्यमृतोपमम् ।

**रुद्धमेकायनं मत्वा पतोल्मुक इवारिषु ॥ २६ ॥**

**अन्वयः**—स्वर्गद्वारोपमम् अथवा अमृतोपमम् अपि राज्यम् एकायनं रुद्धं मत्वा उल्मुकः इव अरिषु पत।

**अर्थः**—स्वर्गद्वारोपममिति। स्वर्गद्वारोपमं=स्वर्गद्वारतुल्यम्, अथवा=किंवा, अमृतोपममपि=सुधासदृशमपि 'पीयूषममृतं सुधे'त्यमरः, राज्यं=राष्ट्रम्, एकायनम्=एकगतिकम्, अतएव रुद्धं=ग्रस्तं, मत्वा=ज्ञात्वा, उल्मुकः इव=ज्वलदिन्धनमिव, अरिषु=शत्रुषु, पत=निपत आक्रमणं कुरु-इत्यर्थः ॥ २६ ॥

विलास—स्वर्गद्वार के समान अथवा अमृत के भी समान राज्य है, स्वर्ग और राज्य में से एक को रुका जान जलती लकड़ी के समान शत्रुओं पर गिरो अर्थात् उन पर चढ़ाई कर दो ॥ २६ ॥

**जहि शत्रून् रणे राजन् स्वधर्ममनुपालय।**
**मा त्वा दृशं सुकृपणं शत्रूणां भयवर्धनम् ॥ ३० ॥**

**अन्वयः**—राजन्! रणे शत्रून् जहि, स्वधर्मम् अनुपालय, शत्रूणां भयवर्धनं सुकृपणं त्वा मा दृशम्।

**अर्थः**—जहीति। राजन्!=नृप!, रणे=सङ्ग्रामे, शत्रून्=रिपून्, जहि=नाशय, स्वधर्मं=क्षत्रियधर्मं युद्धानुष्ठानमित्यर्थः, अनुपालय=परिरक्ष, शत्रूणां=रिपूणां, भयवर्धनं=भीतिच्छेदकरं हर्षप्रदमित्यर्थः, वृधू छेदने इत्यस्मात् युच् 'युवोरनाका'विति योरनादेशः, सुकृपणं=बहुदीनं, त्वा=त्वां, मा दृशम्=मा द्राक्षम्, दृशमिति माङ्योगादडभावे 'इरितो वे'त्यङ्पक्षे दृशिर् प्रेक्षणे इत्यस्य लुङुत्तमैकवचने रूपम् ॥ ३० ॥

विलास—राजन्। युद्ध में शत्रुओं को मार डालो और अपने धर्म का पालन करो, अति दीन, शत्रुओं के भय को छेदने वाले तुमको मैं न देखूं ॥ ३० ॥

**अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम्।**
**अपि त्वां नानुपश्येयं दीनाद्दीनमिवास्थितम् ॥ ३१ ॥**

**अन्वयः**—शोचद्भिः अस्मदीयैः च नदद्भिः परैः च वृतं दीनात् दीनम् इव आस्थितं त्वां न अनुपश्येयम् अपि।

**अर्थः**—अस्मदीयैरिति। शोचद्भिः=शोकं कुर्वद्भिः, अस्मदीयैः=अस्मत्पक्षाश्रितैर्जनैः, च=अपिच, नदद्भिः=विजयेन गर्जद्भिः, परैः च=शत्रुभिरपि, वृतं=परिवृतं, दीनात् दीनम् इव=अत्यन्तं दीनमिव, आस्थितम्=अवस्थितं, त्वां=भवन्तं, न अनुपश्येयम् अपि=नैव पुनः प्रेक्षेय, पुनरर्थेऽत्रापिः ॥ ३१ ॥

विलास—शोकपूर्ण हम लोगों से तथा हर्षपूर्ण शत्रुओं से घिरे हुए दीन से भी दीन की भांति आकर बैठे हुए तुमको भी मैं फिर न देख पाऊं ॥ ३१ ॥

हृष्य सौवीरकन्याभिः श्लाघ स्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥ ३२ ॥

**अन्वयः**—पुरा यथा ( त्वं ) सौवीरकन्याभिः हृष्य, स्वार्थैः श्लाघ, अवसन्नः सन् सैन्धवकन्यानां वशं मा च गमः ।

**अर्थः**—हृष्येति । पुरा यथा=पूर्ववत् , त्वं, सौवीरकन्याभिः = सौवीरदेशस्थितैः स्वदारैः, हृष्य=हर्षं प्राप्नुहि, स्वार्थैः=स्वपदार्थैः, श्लाघ=आत्मानं प्रशंस, श्लाघधातोः परस्मैपदे प्रयोग आर्षः, अवसन्नः = सीदन् खिन्नो दीनः सन्नित्यर्थः, सैन्धवकन्यानां = सिन्धुदेशसम्बन्धिनीनां, शत्रुयुवतीनां, वशम्=अधीनतां, मा च गमः = नैव गच्छेः 'न माङ्योगे' इत्यडभावः ॥ ३२ ॥

विलास—पहिले की तरह तुम सौवीर देश की कन्याओं अर्थात् अपनी स्त्रियों द्वारा आनन्दित हो और स्वार्थों से प्रशंसित हो, दीन होकर सैन्धव देश की कन्याओं अर्थात् रिपुस्त्रियों के वश में न हो ॥ ३२ ॥

युवा रूपेण सम्पन्नो विद्ययाऽभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ॥ ३३ ॥
अधुर्यवच्च वोढव्ये मन्ये मरणमेव तत् ॥ ३४ ॥

**अन्वयः**—रूपेण विद्यया अभिजनेन च सम्पन्नः यशस्वी लोकविश्रुतः त्वादृशः युवा यत् विकुर्वीत, वोढव्ये अधुर्यवत् च स्यात् , तत् मरणम् एव मन्ये ।

**अर्थः**—युवेति । रूपेण = सौन्दर्याद्याकृत्या, विद्यया = ज्ञानेन, अभिजनेन= कुलेन पूर्वजोषितदेशेन च, सम्पन्नः = युक्तः, यशस्वी = कीर्तिमान् , लोकविश्रुतः=विश्वविख्यातः, त्वादृशः=त्वत्समः, युवा = तरुणः पुरुषः, यत् = यतः, विकुर्वीत=अपसरणं कुर्वीत, वोढव्ये=वहनीये भारे, अधुर्यवत्=अदान्तवृषभ इव, स्यात तत्=विकारकरणं, मरणम् एव=मृत्युमेव, मन्ये=प्रत्येमि, अहमिति शेषः ॥ ३३-३४

विलास—रूप, विद्या, कुल और देश से सम्पन्न, यशस्वी, संसार में प्रसिद्ध तुम्हारे ऐसा युवा मनुष्य जो हट जाय, बोझ ढोने में मतवाले बैल की तरह तो वह ( हट जाना ) मरण ही मैं समझती हूं ॥ ३३-३४ ॥

यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ॥ ३५ ॥

**अन्वयः**—( अहं ) यदि परस्य प्रियवादिनं पृष्ठतः अनुव्रजन्तं वा त्वाम् अनुपश्यामि, ( तर्हि ) मे हृदयस्य का शान्तिः ।

**अर्थः**—यदीति । अहं, यदि = चेत्, परस्य=शत्रोः, प्रियवादिनं = प्रियभाषणशीलं, पृष्ठतः = पश्चात्, अनुव्रजन्तं वा = अनुसरन्तं वा, त्वां = भवन्तम्, अनुपश्यामि = एतदनन्तरमवलोकयामि, तर्हि, मे = मम, हृदयस्य=मनसः, का शान्तिः = कीदृक् शमः ॥ ३५ ॥

विलास—यदि मैं पराये से मीठी ( चिकनी चुपडी ) बातें करते हुए या शत्रु का अनुसरण करते हुए तुमको देख लूं तो मेरे हृदय को शान्ति कहाँ ? ॥ ३५ ॥

**नास्मिन् जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।**
**न त्वं परस्यानुचरस्तात जीवितुमर्हसि ॥ ३६ ॥**

**अन्वयः**—यः अन्यस्य पृष्ठतः गच्छेत् ( तादृशः ) अस्मिन् कुले जातु न जातः, तात ! त्वं परस्य अनुचरः सन् जीवितुं न अर्हसि ।

**अर्थः**—नेति । यः = पुरुषः, अन्यस्य = परस्य, पृष्ठतः = पृष्ठभागे पश्चादित्यर्थः, सार्वविभक्तिकस्तसिल्, गच्छेत्=यायात् अनुसरेदित्यर्थः, तादृशः=तथाविधः पुरुषः, अस्मिन् = एतस्मिन्, कुले = वंशे, जातु = कदाचिदपि 'कदाचिज्जातु' इत्यमरः, न जातः = नोत्पन्नः, तात = वत्स !, त्वं = भवान्, परस्य = शत्रोः, अनुचरः=अनुसरणशीलस्तदाज्ञाधारकः सन्, जीवितुं=प्राणितुं, न अर्हसि= योग्यो नासि ॥ ३६ ॥

विलास—जो दूसरे का अनुसरण करे ऐसा कभी इस कुल में नहीं जन्मा, तो बेटा ! दूसरे का अनुचर बन तुम जीवित रहना न चाहो ॥ ३६ ॥

**अहं हि क्षत्रहृदयं वेद यत् परिशाश्वतम् ।**
**पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ।**
**शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ॥ ३७ ॥**

**अन्वयः**—प्रजापतिविनिर्मितं शाश्वतं च अव्ययम् एवं च यत् पूर्वैः पूर्वतरैः परैः परतरैः अपि प्रोक्तम्, परिशाश्वतं ( तत् ) क्षत्रहृदयं हि अहं वेद ।

**अर्थः**—अहमिति । प्रजापतिविनिर्मितं प्रजापतिना=वेधसा 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः, विनिर्मितं = रचितं, शाश्वतं = नित्यं च, अव्ययम् एव च=अविनाश्यपि, यत्=क्षत्रियकर्तव्यं, पूर्वैः=प्राचीनैः, स्ववंश्यैरित्यर्थः, पूर्वतरैः=ततोऽपि प्राचीनैः, परैः = अन्यवंश्यैः, परतरैः अपि = वृद्धैरपि विद्वद्भिः, प्रोक्तं=कथितम्, परिशाश्वतं = सनातनं, तत, क्षत्रहृदयं क्षत्रस्य=क्षत्रियधर्मस्य, हृदयं=तत्त्वं, हि= निश्चयेन, अहं, वेद=वेद्मि जानामीत्यर्थः, 'विदो लटो वा' इति मिपो णल्॥३७॥

विलास—विधाता के द्वारा बनाये, सर्वदा रहने वाले और अविनाशी जिस क्षत्रिय-

धर्म को पुराने और उनसे भी पुराने तथा नये और उनसे भी नये लोगों ने कहा है, उस धर्म का हृदय ( तत्त्व ) मैं अवश्य या निश्चित रूप से जानती हूं ॥ ३७ ॥

**यो वै कश्चिदिहाऽऽजातः क्षत्रियः क्षत्रकर्मवित् ।**

**भयाद् वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥ ३८ ॥**

**अन्वयः**—क्षत्रकर्मवित् यः कश्चित् क्षत्रियः इह आजातः वै, (सः) भयात् वृत्तिसमीक्षो वा ( भवन् ) इह कस्यचित् न नमेत् ।

**अर्थः**—य इति । क्षत्रकर्मवित् क्षत्राणां=क्षत्रियाणां, कर्म=कर्तव्यं, वेत्ति = जानातीति तथाविधः, यः कश्चित्=यः कोऽपि, क्षत्रियः=राजन्यः 'राजन्यः क्षत्रियो विराट्' इत्यमरः, इह=अस्मिन् कुले, आजातः=सम्यगुत्पन्नः कुलीनोऽभवदित्यर्थः, वै = निश्चयेन, सः = क्षत्रियः, भयात् = भियः 'भीतिर्भीः साध्वसं भय'मित्यमरः, वृत्तिसमीक्षः वृत्तिं=जीवनं, समीक्षते=सम्यगालोचयतीति वा भवन्, इह=संसारे, कस्यचित्=कस्यापि पुंसः, संमुखमिति शेषः, न नमेत्=नतो न स्यात्, दैन्यं दर्शयन् स्वं शिरो नमयन्नोपतिष्ठेतेत्यर्थः ॥ ३८ ॥

विलास--क्षत्रियों के कर्तव्य को जानने वाले जिस किसी क्षत्रिय ने इस कुल में जन्म लिया, वह भय से या जीविका की आशा से संसार में किसी के भी सामने न झुकेगा ॥ ३८ ॥

**उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।**

**अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥ ३९ ॥**

**अन्वयः**—( वीरः ) उद्यच्छेत् एव, न नमेत्, हि उद्यमः एव पौरुषम् ( अभिधीयते, ) ( धनुरिव ) अपर्वणि भज्येत अपि, इह कस्यचित् न नमेत ।

**अर्थः**—उद्यच्छेदिति । वीरः, उद्यच्छेत् एव = उद्योगं कुर्यादेव, न नमेत्= दीनतां प्रकाशयन् प्रवणतो न स्यात्, हि = यतः, उद्यमः एव = प्रयत्न एव, पौरुषं = पुरुषार्थः, अभिधीयते = कथ्यते, धनुः इव = चाप इव 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुक'मिति कोशः, अपर्वणि=पर्वातिरिक्तस्थले वृथापि वा, भज्येत अपि = भङ्गं नाशं प्राप्नुयादपि, किन्तु, इह = संसारे, कस्यचित्—कस्यापि अग्रे, न नमेत = नतिं न गच्छेत्, नमेतेत्यात्मनेपदमार्षम् ॥ ३९ ॥

विलास--प्रयत्न ही करना चाहिये, नमना नहीं चाहिये क्योंकि प्रयत्न ही पुरुषार्थ कहा जाता है, धनुष्य का बिना पोर के बीच ही में टूटना अच्छा नमना नहीं, इसी प्रकार असमय में ही क्षत्रिय का मर जाना अच्छा किन्तु यहां किसी के आगे सिर झुकाना नहीं ॥ ३९ ॥

मातङ्गो मत्त इव च परीयात् स महामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ॥ ४० ॥

**अन्वयः**—सः महामनाः मत्तः मातङ्गः इव परीयात्, हे सञ्जय ! धर्माय एव च नित्यं ब्राह्मणेभ्यः नमेत् ।

**अर्थः**—मातङ्ग इति । सः = प्रसिद्धः, महामनाः = महात्मा, मत्तः=उन्मत्तः, मातङ्गः इव = गज इव 'गजेऽपि नागमातङ्गौ' इत्यमरः, परीयात् = पर्यटनं कुर्यात्, हे सञ्जय !, धर्माय एव = केवलं धर्मबुद्ध्यैव, नित्यम्=अनवरतं 'नित्यानवरताजस्र'मित्यमरः, ब्राह्मणेभ्यः = विप्रेभ्यः विप्रानिति यावत्, नमेत्=प्रणमेत् नमस्कारं कुर्यात् ॥ ४० ॥

विलास--जो मतवाले हाथी के समान इधर उधर घूमता है वही महात्मा है, ंजय ! केवल धर्म के लिये ब्राह्मणों को प्रतिदिन प्रणाम करना चाहिये ॥ ४० ॥

नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥ ४१ ॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने द्वितीयोऽध्यायः ।

---

**अन्वयः**—ससहायः असहायः वा (महान्) इतरान् वर्णान् नियच्छन् सर्वदुष्कृतः विनिघ्नन् च यावज्जीवं तथा भवेत् ।

**अर्थः**—नियच्छन्निति । ससहायः=सहायवान्, असहायः=निःसहायो वा, महान्=श्रेष्ठः क्षितिपतिः, इतरान् = विप्रभिन्नान्, वर्णान्=क्षत्रियादीन्, नियच्छन्= वशयन्, सर्वदुष्कृतः सर्वे = सम्पूर्णाः, ये दुष्कृतः=पापिष्ठाः तान्, विनिघ्नन् = विनाशयन् च, यावज्जीवं = जीवनमभिव्याप्य मृत्युपर्यन्तमित्यर्थः, तथा=पूर्वोक्ताचरणशीलः, भवेत् = भूयात् ॥ ४१ ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिविरचिते लीलाख्ये विदुलोपाख्यानव्याख्याने द्वितीयोऽध्यायः समाप्तः ।

---

विलास--बड़े लोग असहाय या सहायवान् हों अपने जीवन भर अन्य वर्णों को अधीन रखते तथा सारे अधर्मियों का नाश करते हुए वैसे ही बने रहते हैं ॥ ४१ ॥

इति विदुलोपाख्यान के 'विलास' नामक हिन्दीभाषानुवाद का दूसरा अध्याय समाप्त ।

---

# तृतीयोऽध्यायः ।

**पुत्र उवाच—**

**कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।**
**मम मातस्त्वकरुणे वीरप्रज्ञे ह्यमर्षणे ॥ १ ॥**

पुत्रः = सञ्जयः, उवाच = स्वाभिप्रायमकथयत् ।

**अन्वयः**—अकरुणे अमर्षणे वीरप्रज्ञे मम मातः ! ते हृदयं कृष्णायसस्य संहत्य इव कृतम् ।

**अर्थः**—कृष्णायसस्येति । अकरुणे=निर्दये, अमर्षणे =कोपने, वीरप्रज्ञे वीरस्येव=शूरस्येव युद्धप्रवर्तिनी, प्रज्ञा=मतिर्यस्यास्तत्सम्बुद्धौ 'धीः प्रज्ञा शेमुषी मति'-रित्यमरः, मम=मे, मातः = जननि ! 'जनयित्री प्रसूर्माता जननी'त्यमरः, ते=तव, हृदयं = चित्तं, कृष्णायसस्य=कृष्णलोहस्य, संहत्य इव = पिण्डीकृत्येव, कृतं= निर्मितम् , हि-तु-चेत्यव्ययत्रयं पादपूर्त्यर्थं 'हि तु च स्म ह वै पादपूरणे' इति कोशात् ॥ १ ॥

**पुत्र संजयने अपना अभिप्राय कहा--**

विलास--दयाहीन, क्रोधी तथा शूरों की सी बुद्धिवाली हे मेरी माता ! तुम्हारा हृदय मानों लोहे के पिण्ड से बना हुआ है ॥ १ ॥

**अहो क्षत्रसमाचारो यत्र मामितरं यथा ।**
**नियोजयसि युद्धाय परमातेव मां तथा ॥ २ ॥**
**ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ॥ ३ ॥**

**अन्वयः**—क्षत्रसमाचारः अहो, यत्र माम् इतरं यथा ( ज्ञात्वा ) ( त्वं ) परमाता इव मां युद्धाय तथा नियोजयसि, ( अन्यथा ) भवती एकजं पुत्रम् ईदृशं वचनं ब्रूयात् ।

**अर्थः**—अहो इति । क्षत्रसमाचारः क्षत्राणां = क्षत्रियाणां, समाचारः=धर्मः अहो=आश्चर्यं विचित्र इत्यर्थः,यत्र=क्षत्राचारे, मां=मा, इतरं यथा=परकीयमिव, ज्ञात्वा = विदित्वा, त्वं, परमाता परस्य = अन्यस्य, माता = प्रसूरिव, मां = मा, युद्धाय = युद्धं कर्तुं, तथा=तेन प्रकारेण, नियोजयसि=प्रेरयसि, अन्यथा=नोचेत् , भवती = त्वम् , एकजम्=अभ्रातृकमेककमेव, पुत्रं = सुतं 'तनयः सूनुः सुतः पुत्र' इत्यमरः, ईदृशम्=एतादृशं कठोरमित्यर्थः, वचनं=वचः 'भाषितं वचनं वच' इत्यमरः, ब्रूयात् = भाषेत, काकाऽत्र नैव भाषेतेत्यर्थः ॥ २-३ ॥

विलास—क्षत्रियों का आचार ( धर्म ) बहुत ही विचित्र है, जिसमें तुम पराई माता की भांति-जैसे मैं तुम्हारा पुत्र नहीं इस तरह-मुझे लड़ने के लिये नियुक्त

Library Sri Pratap College, Srinagar

कर रही हो, नहीं तो तुम एकलौते अपने पुत्र से ऐसा वचन कहती ? कभी न कहती।

किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्येन किं भोगैर्जीवितेन वा ।
मयि वा सङ्गरहते प्रियपुत्रे विशेषतः ॥ ४ ॥

**अन्वयः**—मयि वा विशेषतः प्रियपुत्रे सङ्गरहते सति माम् अपश्यन्त्याः ते सर्वया अपि पृथिव्या किं नु ? आभरणकृत्येन किम् ? भोगैः जीवितेन वा किम् ?

**अर्थः**—किमिति । मयि वा, विशेषतः=विशेषरूपेण, प्रियपुत्रे प्रियश्चासौ पुत्रश्च प्रियपुत्रः तस्मिन् प्रियः=प्रेमपात्रं, पुत्रः = तनयः तस्मिन् , सङ्गरहते सङ्गरे हतः तस्मिन् सङ्गरे = युद्धे हतः=शत्रुशस्त्रादिना मृतः तस्मिन् सति, मां = मा, अपश्यन्त्याः=अविलोकयन्त्याः, ते=तव, सर्वयापि=सकलयापि, पृथिव्या=अवन्या 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही'त्यमरः, किं नु = किं प्रयोजनम् , आभरणकृत्येन=भूषणादिसत्तया च, किं=को लाभः, भोगैः=उपभोगसाधनीभूतैः पदार्थैः, जीवितेन=जीवनेन वा, किम्=किमस्ति पृथिव्यादयः सर्वे पदार्था मय्यवर्तमाने निरर्थका एवेति तात्पर्यम् , एतस्यां स्थितौ किमिति मां योद्धुं प्रवर्तयसीति मध्ये भाषणस्याशयः ॥ ४ ॥

विलास—**विशेष रूप से तुम्हारे अपने लाडले पुत्र मेरे युद्ध में मर जाने पर मुझे न देखते हुए तुम्हें सारी पृथ्वी, अलङ्कार, भोग तथा जीवन से भी क्या लाभ ? कुछ नहीं, मेरे न रहने पर सभी व्यर्थ है ॥ ४ ॥**

**मातोवाच—**

सर्वावस्था हि विदुषां तात धर्मार्थकारणात् ।
तावेवाभिसमीक्ष्याहं सञ्जय त्वामचूचुदम् ॥ ५ ॥

माता = जननी विदुला, उवाच = ज्ञापयन्ती समुदतरत् ।

**अन्वयः**—तात ! धर्मार्थकारणात् विदुषां सर्वावस्था हि, सञ्जय ! अहं तौ एव अभिसमीक्ष्य त्वाम् अचूचुदम् ।

**अर्थः**—सर्वावस्थेति । तात=वत्स ! धर्मार्थकारणात् धर्मश्च अर्थश्च धर्मार्थौ तयोः कारणं तस्मात् धर्मः=सुकृतं 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष'इत्यमरः, अर्थः=धनं तयोः कारणात्=निमित्तात् , विदुषां=विपश्चितां 'विद्वान् विपश्चिद्दोषज्ञ' इति कोशः, सर्वावस्था=गार्हस्थ्यादिरूपा स्थितिरस्ति, हि=निश्चयेन, सञ्जय=पुत्र !, अहं, तौ एव=धर्मार्थाविव, अभिसमीक्ष्य=सर्वभावेन विचार्यैव, त्वां = भवन्तम् , अचूचुदम् =प्रैरयम् ॥ ५ ॥

माता समझाती हुई बोली—

विलास—बेटा सञ्जय ! विद्वानों की सारी गृहस्थी आदि धर्म और अर्थ (धन) के ही कारण है, अतः उन्हीं दोनों धर्मार्थों का ही विचार कर मैंने तुम्हे प्रेरणा की ॥ ५ ॥

**स समीक्ष्य क्रमोपेतो मुख्यः कालोऽयमागतः ।**
**अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ॥ ६ ॥**
**असम्भावितरूपस्त्वमानृशंस्यं करिष्यसि ।**
**तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय ॥ ७ ॥**

**अन्वयः**—सः अयं मुख्यः कालः समीक्ष्य क्रमोपेतः आगतः, अस्मिन् आगते काले चेत् कार्यं न प्रतिपद्यसे, आनृशंस्यं च करिष्यसि, ( तत् ) त्वम् असम्भावितरूपः ( भविष्यसि ), यदि (अहं) न ब्रूयां (तर्हि) सञ्जय ! तं त्वाम् अयशसा स्पृष्टं ( कुर्याम् ) ।

**अर्थः**—स इति, असम्भावितरूप इति च । सः = पूर्वोक्तप्रकारकः, अयम् = एषः, मुख्यः = प्रधानः, कालः अवसरः, समीक्ष्य = सम्यग्विचार्य, क्रमोपेतः क्रमेण = दर्शनीयपराक्रमेण, उपेतः = युक्तः, आगतः = उपस्थितः, अस्मिन् = एतस्मिन् , आगते = प्राप्ते, काले = अवसरे, चेत् = यदि, कार्यं = युद्धरूपं कृत्यं, न प्रतिपद्यसे = न स्वीकुर्याः, आनृशंस्यं च = दयां च देहे शत्रुषु वा, करिष्यसि = विधास्यसि, तत् = तर्हि, त्वं = भवान् , असंभावितरूपः, न संभावितं = सम्मानितं, रूपं = स्वरूपं यस्य सः निन्दित इत्यर्थः, भविष्यसि, यदि-चेत् , एवं स्थितौ, अहं, न ब्रूयां = सत्यं वास्तविकं च धर्मतत्त्वं तव पुरस्तान्न प्रकटयेय, हे सञ्जय ! तर्हि, तं = युद्धाप्रवृत्तं, त्वां = भवन्तम् , अयशसा = दुष्कीर्त्या, स्पृष्टं = संवलितं, कुर्याम् ॥ ६-७ ॥

विलास—यह वही पराक्रम देखने योग्य मुख्य काल आ पहुँचा, ऐसे सुअवसर पर यदि कार्य न करो, अपने ऊपर या शत्रु पर दया दिखाओ तो निन्दित हो जाओगे, यदि मैं न बताऊँ तो तुम्हें बदनाम करूं ॥ ६-७ ॥

**खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ।**
**सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ॥ ८ ॥**

**अन्वयः**—( सन्तः ) निःसामर्थ्यम् अहेतुकं तत् खरीवात्सल्यम् आहुः, ( अतः त्वं ) सद्भिः विगर्हितं मूर्खनिषेवितं मार्गं त्यज ।

**अर्थः**—खरीत्यादि । सन्तः = मनीषिणः, निःसामर्थ्यं = बलशून्यम् , अहेतुकं = निष्प्रयोजनं, तत् = प्रेम, खरीवात्सल्यम् खर्याः = गर्दभ्याः, वात्सल्यं = सुतप्रेम, यथा-उभयलोकानुपयुक्तेऽपि पुत्रे खरी वृथा वात्सल्यं करोति तथा,

आहुः = कथयन्ति, अतः, त्वं, सद्भिः = सज्जनैः, विगर्हितं = निन्दितं, मूर्खनिषेवितं मूर्खैः = मूढैः 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः, निषेवितं = स्वीकृत्याचरितं, मार्गं = पन्थानम् 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृति'रित्यमरः, त्यज = मुञ्च ॥ ८ ॥

विलास—सामर्थ्यहीन अतएव निष्प्रयोजन प्रेम को सन्तों ने गदही के प्रेम के समान कहा है, इसलिये सन्तों से निन्दित तथा मूर्खों से सेवित मार्ग को छोड़ दो॥

**अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ।**
**तव स्याद्यदि सद् वृत्तं तेन मे त्वं प्रियो भवेः ॥ ९ ॥**

**अन्वयः**—महती वै अविद्या अस्ति, प्रजाः याम् इमां संश्रिताः, यदि तव ( सा ), ( तत् ) सत् वृत्तम् , तेन त्वं मे प्रियः भवेः ।

**अर्थः**—अविद्येति । महती=विशाला सर्वत्र विस्तृता, वै=निश्चयेन, अविद्या= अज्ञानम् , अस्ति = वर्तते, प्रजाः = जनाः, याम् इमाम् = अविद्याम् , संश्रिताः= आश्रिताः, प्रायोऽनेकेऽविद्यावशवर्तिन एव, सन्ति, यदि = चेत् , तव=ते, सा = अनात्मनि देहे आत्मबुद्धिः, स्यात्=भवेत् , तत् , सत्=समीचीनं, वृत्तं=शीलम् ; तेन = सदनुष्ठानेन, त्वं = भवान् , मे = मम, प्रियः = वल्लभः प्रेमास्पदमित्यर्थः, भवेः=स्याः, उपहासोऽयम्–देहात्मवादी दुर्वृत्तो मम द्वेष्य एव भविष्यसीत्यर्थः ॥

विलास—अज्ञान सभी जगह फैला हुआ है, प्रायः, लोग इसके वश में हैं, ( हँसी में ) यदि वही तुममें भी हो तो तुम मुझे प्यारे लग सकते हो, ( वस्तुतः ) शरीर को आत्मा मानने वाले, दुराचारी तुम मेरे शत्रु ही होगे ॥ ९ ॥

**धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन ।**
**दैवमानुषयुक्तेन सद्भिराचरितेन च ॥ १० ॥**

**अन्वयः**—( त्वया ) दैवमानुषयुक्तेन सद्भिः आचरितेन च धर्मार्थगुणयुक्तेन ( भाव्यम् ), इतरेण कथञ्चन न ।

**अर्थः**—धर्मार्थेत्यादि । त्वया = भवता, दैवमानुषयुक्तेन दैवं च मानुषं च दैवमानुषे ताभ्यां युक्तः तेन दैवं = भाग्यं 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि'रित्यमरः, मानुषं = मनुष्यकर्म, ताभ्यां युक्तः सहितः तेन, सद्भिः=सज्जनैः, आचरितेन = व्यवहारं नीतेन संमानितेनेत्यर्थः, धर्मार्थगुणयुक्तेन धर्मः=पुण्यम्, अर्थः = धनं तयोः गुणः = यज्ञदानाभ्यां स्वीयजनोन्नयनं, तेन युक्तः = अन्वितः तेन 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी, अर्थोऽभिधेयरैवस्तु' इति कोशौ, भाव्यं = भवितव्यम् , इतरेण = अन्येन धर्मार्थभिन्नेनेत्यर्थः, कथञ्चन = केनापि विधिना, न = न भाव्यमिति ॥ १० ॥

विलास—भाग्य तथा पौरुष से युक्त, सज्जनोंसे आदृत, धर्मार्थगुणवाले तुम बनो इतर गुणों से युक्त नहीं ॥ १० ॥

**यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।**
**अनुत्थानवता चापि दुर्विनीतेन दुर्धिया ।**
**रमते यस्तु पुत्रेण मोघं तस्य प्रजाफलम् ॥ ११ ॥**

**अन्वयः**—यः अविनीतेन पुत्रनप्तृणा एवं रमते हि, यः तु अनुत्थानवता दुर्विनीतेन दुर्धिया अपि च पुत्रेण रमते तस्य प्रजाफलं मोघम् ( अस्ति ) ।

**अर्थः**—य इति । यः = पुरुषः, अविनीतेन = स्वधर्मशिक्षाहीनेन अविनयग्राहिणेत्यर्थः 'विनीतो विनयग्राही'त्यमरः, पुत्रनप्तृणा पुत्रश्च नप्ता च पुत्रनप्तृ तेन प्राणित्वादेकवद्भावः, कार्याक्षमत्वद्योतनाय नपुंसकत्वमार्षम् , पुत्रः = सुतः, नप्ता = दुहितुः सूनुः ताभ्यामित्यर्थः, 'नप्त्री पौत्री सुतात्मजे'त्यमरः, एवं=सत्यमार्गानुपदेशपुरस्सरं, रमते = क्रीडति, तयोः प्रेमातिशयं दर्शयंस्तिष्ठतीत्यर्थः, हि= पादपूरणे, यः तु = यश्च पुमान् , अनुत्थानवता = हेतौ सत्यपि शत्रुषु स्वीयाभियानशून्येन, दुर्विनीतेन=दुःशिक्षितेन, दुर्धियाऽपि च = दुर्मतिनापि, पुत्रेण=सुतेन 'सुतः पुत्र' इत्यमरः, रमते=परिष्वङ्गादिना आनन्दं लभते, तस्य=पुंसः, प्रजाफलं सन्तानजननं, मोघं = व्यर्थं 'मोघं निरर्थक'मित्यमरः, अस्ति ॥ ११ ॥

विलास—जो अमर्यादित पुत्र-पौत्र-दौहित्र से आनन्दित होता है और जो कारण रहने पर भी शत्रु पर चढाई न करने वाले, दुर्विनीत, तथा दुर्बुद्धि पुत्र से प्रसन्न है उसका सन्तानोत्पादन व्यर्थ है ॥ ११ ॥

**अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।**
**सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥ १२ ॥**

**अन्वयः**—कर्माणि अकुर्वन्तः निन्दितानि च कुर्वन्तः पुरुषाधमाः नैव इह नहि अमुत्र सुखं लभन्ते ।

**अर्थः**—अकुर्वन्त इति । कर्माणि = स्वधर्मोक्तानि सत्कार्याणि, अकुर्वन्तः= अविदधतः, निन्दितानि च = निषिद्धानि च कर्माणि, कुर्वन्तः = सम्पादयन्तः, पुरुषाधमाः पुरुषेषु = नरेषु अधमाः = अवमाः 'रेफयाप्यावमाधमा' इत्यमरः, क्षुद्राः पुरुषा इत्यर्थः, नैव = नह्येव, इह = संसारे, नहि = नच, अमुत्र=परलोके, सुखं = शर्म 'शर्मशातसुखानि चे'त्यमरः, लभन्ते = विन्दन्ति ॥ १२ ॥

विलास—उचित कर्मों के न करने वाले तथा निषिद्ध कर्मों के करने वाले अधम पुरुष न इस लोक में न परलोक में सुख पाते हैं ॥ १२ ॥

युद्धाय क्षत्रियः सृष्टः सञ्जयेह जयाय च।
जयन् वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥ १३ ॥

**अन्वयः**—सञ्जय ! क्षत्रियः इह युद्धाय जयाय च सृष्टः, जयन् वा वध्यमानः वा ( सः ) इन्द्रसलोकतां प्राप्नोति।

**अर्थः**—युद्धायेति। सञ्जय ! = हे पुत्र !, क्षत्रियः = क्षत्रियजातिकः पुरुषः, इह = मर्त्यलोके, युद्धाय = योद्धुं, जयाय च = जेतुं च, सृष्टः = निर्मितः, जयन् वा = प्राप्तजयो वा, वध्यमानः वा = हतो वा, सः, इन्द्रसलोकताम् = इन्द्रसमानलोकत्वं स्वर्गमित्यर्थः, प्राप्नोति = लभते ॥ १३ ॥

विलास—हे सञ्जय ! क्षत्रियजाति इस संसार में युद्ध और जय के लिये रची गई, वह जीत कर या मर कर स्वर्ग को पाती है ॥ १३ ॥

न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम्।
यदमित्रान् वशे कृत्वा क्षत्रियः सुखमेधते ॥ १४ ॥

**अन्वयः**—दिवि पुण्ये शक्रभवने तत् सुखं न विद्यते, क्षत्रियः अमित्रान् वशे कृत्वा यत् सुखम् एधते।

**अर्थः**—नेति। दिवि=व्योम्नि 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बर'-मित्यमरः, पुण्ये = सुन्दरे, शक्रभवने शक्रस्य = इन्द्रस्य, भवनं = मन्दिरं तत्र भवनागारमन्दिर'मिति कोशः, तत् सुखम् = आनन्दः 'स्यादानन्दथुरानन्दशर्मशातसुखानि चे'त्यमरः, न विद्यते=नास्ति, क्षत्रियः=राजन्यः, अमित्रान् = द्विषः द्विड् विपक्षाहितामित्रे'त्यमरः, वशे = अधीने, कृत्वा = विधाय, यत्, सुखं=शर्म, एधते = प्राप्नोति ॥ १४ ॥

विलास—क्षत्रिय को जो सुख शत्रुओं को अधीन करने पर मिलता है, वह स्वर्ग में इन्द्रके पवित्र या सुन्दर मन्दिर में भी नहीं मिलता ॥ १४ ॥

मन्युना दह्यमानेन पुरुषेण मनस्विना।
निकृतेनेह बहुशः शत्रून् प्रति जिगीषया ॥ १५ ॥

**अन्वयः**—मन्युना दह्यमानेन मनस्विना पुरुषेण इह बहुशः निकृतेन (अपि सता) जिगीषया शत्रून् प्रति ( प्रस्थातव्यम् )।

**अर्थः**—मन्युनेति। मन्युना=क्रोधेन 'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरः, दह्यमानेन = सन्तप्यमानेन, मनस्विना = मानिना, पुरुषेण = नरेण 'पुरुषाः पूरुषा नरा' इत्यमरः, इह=संसारे, बहुशः=अनेकवारं 'बह्वल्पार्थाच्छस्कारकादन्यतरस्या'-मिति शस्, निकृतेन अपि = अपकृतेनापि सता, जिगीषया=विजयेच्छया, शत्रून् प्रति = शत्रूनुद्दिश्य, प्रस्थातव्यं = प्रयातव्यम् ॥ १५ ॥

विलास-- क्रोध से जलने वाले मानी पुरुष को बार बार तिरस्कृत होने पर विजय की इच्छा से शत्रुओं पर आक्रमण करना ही चाहिये ॥ १५ ॥

**आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च ।**
**अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥ १६ ॥**

**अन्वयः**—आत्मानं परित्यज्य वा शत्रुं च वा विनिपात्य अस्य शान्ति भवेत्, अतः अन्येन प्रकारेण कुतः ।

**अर्थः**—आत्मानमिति । आत्मानं = स्वदेहं, परित्यज्य=युद्धे मुक्त्वा, वा अथवा, शत्रुं च=सपत्नं च वा, विनिपात्य=हत्वा, अस्य=राज्ञः, शान्तिः=शम भवेत्=स्यात्, अतः=एतस्मात्, अन्येन = इतरेण, प्रकारेण=विधिना, शान्तिरिति पुनरनुवर्तनीयम्, कुतः = कथं स्यात्, नैवेत्याशयः ॥ १६ ॥

विलास—युद्ध में अपने शरीर को छोड अथवा शत्रु को गिरा (मार) कर ही उस हृदय को शान्ति मिलती है, और किसी दूसरे प्रकार से कहां ॥ १६ ॥

**इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।**
**यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ १७ ॥**

**अन्वयः**—इह हि प्राज्ञः पुरुषः स्वल्पम् अप्रियम् इच्छति, लोके यस्य स्वल प्रियं, तस्य ध्रुवम् अल्पम् अप्रियं ( स्यात् ) ।

**अर्थः**—इहेति । इह हि = अस्मिन् संसारे तु, प्राज्ञः=मनीषी 'धीरो मनी ज्ञः प्राज्ञः संख्यावान् पण्डितः कवि'रित्यरः, पुरुषः=नरः, स्वल्पम्=अल्पमैश्वर्यम् अप्रियम्=अनिष्टम्, इच्छति=मन्यते, लोके=जगति, यस्य पुंसः, स्वल्पं= न्यूनपरिमाणमैश्वर्यं, प्रियम् = इष्टम्, तस्य = पुंसः, ध्रुव = निश्चितम्, अल्पं स्वल्पं वैभवम्, अप्रियम्=अनर्थकरं, स्यात्=भवेत्, "असन्तुष्टा द्विजा नष्टाः सन् ष्टाश्चापि पार्थिवा" इति नीत्या राजभिः सन्तुष्टैर्न भाव्यम्, अथ च स्वल्पेना तैर्न सन्तोष्टव्यमिति पद्यस्यास्याभिप्रायः ॥ १७ ॥

विलास—बुद्धिमान् पुरुष संसार में अल्प ऐश्वर्य को पर्याप्त नहीं समझता, जग में थोड़े वैभव से सन्तुष्ट होनेवाले का वह वैभव अनर्थकारी होता है, अतः राजा को थोड़े में सन्तोष न करलेना चाहिये ॥ १७ ॥

**प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।**
**ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ १८ ॥**

**अन्वयः**—पुरुषः प्रियाभावात् च शोभनं नैव प्राप्नोति, सागरं गत्वा गङ्गा इव ( सः ) ध्रुवम् अभावं च अभ्येति ।

**अर्थः**—प्रियाभावादिति । पुरुषः=पुमान्, प्रियाभावात् प्रियस्य=अभीप्सि

य बहुलस्यैश्वर्यस्य, अभावः = न्यूनता तस्मात्, च = तु, शोभनं = मङ्गलं, नैव
ाप्नोति = न लभत एव, सागरं=सिन्धुम् 'उदन्वानुदधिः सिन्धुः सरस्वान् सागरो
र्णव' इत्यमरः, गत्वा=प्राप्य, गङ्गा इव=जाह्नवीव, सः, ध्रुवं=निश्चितम्, अभावं
= नाशमेव, एवार्थेऽत्र चकारः, अभ्येति = अधिगच्छति ॥ १८ ॥

विलास—पुरुष का मनोरथ पूर्ण न होने से मङ्गल नहीं होता और समुद्र में जा मली गङ्गाजी के समान वह नाश को पाता है ॥ १८ ॥

**पुत्र उवाच—**

**नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।**
**कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् ॥ १९ ॥**

पुत्रः = सञ्जयः, उवाच = अब्रवीत् ।

**अन्वयः**—मातः ! विशेषतः पुत्रे इयं मतिः त्वया न वाच्या, इह जडमूक-
त् भूत्वा अत्र कारुण्यम् एव पश्य ।

**अर्थः**—नेति । मातः !=जननि !, विशेषतः = मुख्यतः, पुत्रे = सुते, इयं=
र्वोक्तोपदेशरूपा, मतिः = स्वसम्मतिः, त्वया = भवत्या, न वाच्या=न कथनीया,
ह = अस्मिन् विषये, जडमूकवत्=जडः = निश्चेतनः निश्चेष्टो वा, मूकः=वाचंयमः
द्वत्, भूत्वा, अत्र = स्वसुते मयि, कारुण्यम् एव = करुणामेव 'कारुण्यं करुणा
ृणे'त्यमरः, पश्य = हितत्वेन चिन्तय ॥ १९ ॥

पुत्र सञ्जय ने कहा—

विलास—मां ! खासकर मुझ पुत्र पर तुम्हें यह बुद्धि (भावना) न करनी चाहिये, हां जड और मूक की तरह हो मुझे दया की दृष्टि से ही देखना उचित है ॥ १९ ॥

**मातोवाच—**

**अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।**
**चोद्यं मां चोदयस्येतद् भृशं वै चोदयामि ते ॥ २० ॥**

माता = जननी, उवाच = बभाषे ।

**अन्वयः**—अतः मे भूयसी नन्दिः, यत् एवम् अनुपश्यसि, (त्वं) मां चोद्यं चोदयसि, एतत ते भृशं चोदयामि वै ।

**अर्थः**—अत इति । अतः = त्वद्वचनात्, मे=मम, भूयसी=बहुला, नन्दिः =
समृद्धिः, भवितेति शेषः, यत् = यतः, एवं = कारुण्यम्, अनुपश्यसि = हितत्वेन
चिन्तयसि, एवमपि, त्वं = भवान्, मां = मा, चोद्यं=प्रेरणीयं कथनीयं पूर्वपक्ष-
मित्यर्थः, चोदयसि=कथयितुं प्रेरयसि, एतत्=चोद्यं, ते=तुभ्यं, भृशं=निर्भरम् 'अति
वेलभृशात्यर्थातिमात्रोद्गाढनिर्भर'मित्यमरः, चोदयामि=कथयामि, वै=निश्चयेन ॥ २० ॥

माता बोली--

विलास--इससे मुझे बहुत आनन्द हो रहा है कि तुम इस प्रकार सोच रहे हो और तुम कर्तव्य कहने के लिये कहते हो, इस लिये मैं भी अधिक कहती जाती हूं ॥२०॥

**अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।**
**अहं पश्यामि विजयं कृच्छ्रभावितमेव ते ॥ २१ ॥**

**अन्वयः**—अहं-सर्वसैन्धवान् वै हत्वा कृच्छ्रभावितम् एव ते विजयं (यदा) पश्यामि, अथ त्वां पूजयिष्यामि ।

**अर्थः**—अथेति । अहं, सर्वसैन्धवान् सर्वे च ते सैन्धवाश्च सर्वसैन्धवाः तान् सर्वे = अखिलाः, ये सैन्धवाः = सिन्धुदेशाधिपतितत्पक्षपातिनः तान् , वै=निश्चयेन, हत्वा = विनाश्य, कृच्छ्रभावितं कृच्छ्रेण=कष्टेन 'स्यात्कष्टं कृच्छ्रमाभील'मित्यमरः, भावितं = सम्पादितमेव, ते = तव, विजयं = जयं, यदा, पश्यामि=द्रक्ष्यामि, भविष्यत्यत्र लट् , अथ=अनन्तरं तदेत्यर्थः, त्वां=भवन्तं, पूजयिष्यामि=प्रेम्णा सम्मानयिष्यामि ॥ २१ ॥

विलास—सभी सिन्धु देश के शत्रुओं को मार कर बड़ी कठिनाई से प्राप्त तेरी विजय जब मैं देखूंगी, तब तुम्हारा आदर तथा प्रेम करूंगी ॥ २१ ॥

**पुत्र उवाच—**

**अकोशस्यासहायस्य कुतः सिद्धिर्जयो मम ।**
**इत्यवस्थां विदित्वैतामात्मनात्मनि दारुणाम् ।**
**राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतः ॥ २२ ॥**

पुत्रः = तनयः, उवाच = अगदत् ।

**अन्वयः**—अकोशस्य असहायस्य मम सिद्धिः जयः कुतः, इति एतां दारुणाम् अवस्थाम् आत्मना आत्मनि विदित्वा त्रिदिवात् दुष्कृतः इव राज्यात् मे भावः निवृत्तः ।

**अर्थः**—अकोशस्येति । अकोशस्य = पराजयान्निर्गतकोशस्य धनहीनस्येति यावत् 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययो' रित्यमरः, असहायस्य = साहाय्यकपुरुषत्यक्तस्य, मम = मे, सिद्धिः=अभीष्टप्राप्तिः, जयः = विजयः, कुतः= कस्मात् , इति = इत्थम् , एताम् = इमां, दारुणां=घोराम् , अवस्थां = स्थितिम् , आत्मना = स्वयम् , आत्मनि = मनसि, विदित्वा = ज्ञात्वा, त्रिदिवात् = स्वर्गात् 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया' इत्यमरः, दुष्कृतः इव = पापिष्ठा इव, राज्यात्=मण्डलाधिपत्यात् , मे = मम, भावः = विचारः चित्तमित्यर्थः, निवृत्तः= परावृत्तः दूरीभूत इति यावत् ॥ २२ ॥

पुत्र सञ्जय प्रश्न के रूप में बोल उठा—

विलास—असहाय तथा कोश-हीन मुझे सिद्धि तथा जय कैसे प्राप्त होगी, स्वयं मन में इस भयावनी परिस्थिति को सोच स्वर्ग से पापियों के समान मेरा चित्त राज्य से हट गया ॥ २२ ॥

**ईदृशं भवती कञ्चिदुपायमनुपश्यति ।**
**तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते ॥ २३ ॥**
**करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ २४ ॥**

**अन्वयः**—परिणतप्रज्ञे ! ( यदि ) भवती ईदृशं कञ्चित् उपायम् अनुपश्यति, तत् पृच्छते मे सम्यक् प्रब्रूहि, हि तत् सर्वम् अनुशासनं यथावत् करिष्यामि ।

**अर्थः**—ईदृशमिति । परिणतप्रज्ञे परिणता=परिपक्वा, प्रज्ञा = बुद्धिर्यस्याः सा तत्सम्बुद्धौ=प्रकृष्टज्ञाननिधे मातः ! यदि, भवती=त्वम् , ईदृशम् = एतादृगवस्थायां कार्यसम्पादकं, कञ्चित्=कञ्चन, उपायं=प्रकारम् , अनुपश्यति=जानाति, तत्=तर्हि, पृच्छते=अनुयोगं कुर्वते, मे = मह्यं, सम्यक्=साधु, प्रब्रूहि=स्पष्टं कथय, हि=यस्मात्कारणात , तत्=त्वदुक्तं, सर्वं=सकलम् , अनुशासनं=निदेशं, यथावत्=यथाविधि, करिष्यामि = विधास्यामि ॥ २३-२४ ॥

विलास—परिणाम सोचने वाली माता, यदि तुम ऐसा कोई उपाय जानती हो तो मुझ पूछने वाले को स्पष्ट समझा कर कहो, क्योंकि तुम्हारी कही हुई सभी अज्ञा को मैं ठीक ठीक ढंग से करुंगा ॥ २३-२४ ॥

**मातोवाच—**

**पुत्र नात्माऽवमन्तव्यः पूर्वाभिरसमृद्धिभिः ।**
**अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ।**
**अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ॥ २५ ॥**

माता = जनयित्री, उवाच = उत्तरयामास ।

**अन्वयः**—पुत्र ! पूर्वाभिः असमृद्धिभिः आत्मा न अवमन्तव्यः, हि अर्थाः अभूत्वा भवन्ति, अपरे च भूत्वा नश्यन्ति, सुबालिशैः अर्थाः च अपि अमर्षेण एव न आरब्धव्याः ।

**अर्थः**—पुत्रेति । पुत्र = सूनो, पूर्वाभिः = प्रथमाभिः, असमृद्धिभिः = असम्पद्भिः, आत्मा = जीवात्मा, न अवमन्तव्यः=नापमानितव्यः न तिरस्करणीय इत्यर्थः, हि = तथाहि, अर्थाः = धर्माद्याः, अभूत्वा भवन्ति = अवर्तमाना अपि सम्पद्यन्ते, अपरे च = तद्भिन्नाश्च, भूत्वा = स्थित्वापि, नश्यन्ति=विलुप्यन्ते, सुबालिशैः = अतिमूर्खैः 'मूर्खवैधेयबालिशा' इत्यमरः, अर्थाश्चापि=धर्माद्या अपि

अमर्षेण एव = कोपेनैव 'कोपक्रोधामर्षरोषे'त्यमरः, न आरब्धव्याः=न प्रारभ्याः, पण्डितैस्तु आदरेण आरब्धव्या एवेति भावः ॥ २५ ॥

माता ने उत्तर-स्वरूप कहा—

विलास—बेटा ! पहले की दरिद्रता से अपनी आत्मा को तिरस्कृत न करो, धन न रहने पर भी हो जाता है और कुछ होने पर भी लुप्त होते हैं, क्रोध के कारण ही मूर्खों को धर्मार्थों का आरम्भ न करना चाहिये ॥ २५ ॥

**सर्वेषां कर्मणां तात फले नित्यमनित्यता ।**
**अनित्यमिति जानन्तो न भवन्ति भवन्ति च ॥ २६ ॥**

**अन्वयः**—तात ! सर्वेषां कर्मणां फले नित्यम् अनित्यता, अनित्यम् इति जानन्तः ( सुधियः ) न भवन्ति, भवन्ति च ।

**अर्थः**—सर्वेषामिति । तात = वत्स ! सर्वेषां=सकलानां, कर्मणां=कार्याणां, फले = परिणामे, नित्यं=सदा, अनित्यता = निश्चयाभावः, अनित्यम्=अस्थिरम्, इति = एवं, जानन्तः = विदन्तः, सुधियः = विद्वांसः, न भवन्ति=आरभमाणा न भवन्ति, भवन्ति च=कदाचित् प्रारभन्ते च ॥ २६ ॥

विलास—पुत्र ! सभी कृत्यों के फल के विषय में सदा ही अस्थिरता है, अस्थिर जानते हुए भी विद्वान् कार्यारम्भ कभी नहीं करते हैं ॥ २६ ॥

**अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ।**
**ऐकगुण्यमनीहायामभावः कर्मणां फलम् ।**
**अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥ २७ ॥**

**अन्वयः**—अथ ये न एव कुर्वन्ति, ते जातु नैव भवन्ति, अनीहायां कर्मणाम् अभावः ऐकगुण्यं फलम् , अथ ईहायां द्वैगुण्यं फलं भवति वा न वा ।

**अर्थः**—अथेति । अथ=अनन्तरं, ये=जनाः, न एव कुर्वन्ति=नैव विदधति, ते=जनाः, जातु = कदाचित् 'कदाचिज्जातु' इत्यमरः, नैव भवन्ति = न फलभाजो भवन्ति, अनीहायाम्=अवाञ्छायां चेष्टाया अभावे इत्यर्थः, 'इच्छाकाङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथ' इति कोशः, कर्मणां=कार्याणाम् , अभावः=अप्राप्तिः, ऐकगुण्यम् = एकगुणकमेव, फलं=परिणामोऽस्ति, ईप्सिततमानवाप्तिरेवास्य फलमिति भावः, अथ=पक्षान्तरे, ईहायां=चेष्टायां, द्वैगुण्यं=द्विगुणं, द्विगुणमेव द्वैगुण्यमिति स्वार्थे ष्यञ् , फलं, भवति वा न वा = कदाचिद्भवति कदाचिच्च न भवति, अभावनिश्चयापेक्षया पाक्षिकसद्भाववती प्रवृत्तिरेव श्रेष्ठेत्यर्थः ॥ २७ ॥

विलास—और जो कार्यारंभ नहीं ही करते वे कभी सफल भी नहीं होते, प्रयत्न

ो इच्छा न रहने पर काम का न होना यही एक फल है और प्रयत्न करने पर ोना या न होना इन दोनों परिणामों की संभावना है ॥ २७ ॥

यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।
नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ॥ २८ ॥

**अन्वयः**—यस्य सर्वार्थानाम् अनित्यता प्राक् एव विदिता, हे नृपात्मज ः प्रतिकूले वृद्धिसमृद्धी नुदेत् ।

**अर्थः**—यस्येति । यस्य=विदुषः पुंसः, सर्वार्थानां=सकलवस्तूनाम्, अनित्य-ा=अस्थिरता, प्राक् एव=पूर्वमेव, विदिता=ज्ञाता, हे नृपात्मज=हे राज-न्दन !, सः=पुरुषः, प्रतिकूले=विरुद्धे, वृद्धिसमृद्धी वृद्धिश्च समृद्धिश्च ते वृद्धिः=ीडा, वृधु हिंसायामित्यस्य रूपम्, समृद्धिः=ऐश्वर्यं ते, नुदेत्=दूरीकुर्यात्, ात्मनः पीडां परस्यैश्वर्यं च नुदेदित्याशयः ॥ २८ ॥

विलास—जो सभी वस्तुओं की अस्थिरता को पूर्व ही से समझ चुका है, हे राज-न्दन, वह अपने विरुद्ध हानि लाभ को दूर करे ॥ २८ ॥

उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥ २९ ॥

**अन्वयः**—अव्यथैः सततं 'भविष्यति' इति एव मनः कृत्वा, भूतिकर्मसु त्थातव्यं, जागृतव्यं, योक्तव्यं ( च ) ।

**अर्थः**—उत्थातव्यमिति । अव्यथैः=पीडामगणयद्भिः सोत्साहैरेव पुरुषैः, ततं=सन्ततं, भविष्यति=कार्यमवश्यं सेत्स्यति, इति एव=इत्थमेव, मनः=ानसं मनसीत्यर्थः, कृत्वा=विधाय, भूतिकर्मसु=कल्याणकारिकृत्येषु, उत्थातव्यं=ाष्ठितव्यं, जागृतव्यं=दत्तावधानैर्भवितव्यं, योक्तव्यं=सज्जीभवितव्यं च ॥२९॥

विलास—दुःख का विचार न कर सभी लोगों को "यह काम अवश्य होगा", ऐसा ा मन में सोच कल्याणकारक कार्यों में उठना चाहिये, सावधान होना चाहिये था लग भी जाना चाहिये ॥ २९ ॥

मङ्गलानि पुरस्कृत्य ब्राह्मणांश्चेश्वरैः सह ।
प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ॥ ३० ॥
अभिवर्षति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥ ३१ ॥

**अन्वयः**—पुत्रक ! प्राज्ञस्य नृपतेः मङ्गलानि ईश्वरैः सह ब्राह्मणान् च रस्कृत्य आशु वृद्धिः भवति, दिवाकरः प्राचीम् इव, लक्ष्मीः तम् अभिवर्षति ।

**अर्थः**—मङ्गलानीति । पुत्रक=पुत्र एव पुत्रकः तत्सम्बुद्धौ, प्राज्ञस्य=

बुद्धिमतः, नृपतेः = राज्ञः, मङ्गलानि = स्वस्त्ययन-पुण्याहवाचनादीनि कर्माणि, ईश्वरैः = देवैः, सह = सार्धं, ब्राह्मणान् = विप्रांश्च, पुरस्कृत्य = पूर्वं कृत्वा सम्पूज्य च, आशु = अविलम्बितम् 'अविलम्बितमाशु चे'त्यमरः, वृद्धिः = समृद्धिः, भवति, दिवाकरः = सूर्यः, 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकरा' इत्यमरः, प्राचीम् इव = पूर्वां दिशमिव 'प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमा' इति दिग्भेद-कथनावसरेऽमरः, लक्ष्मीः = श्रीः 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः, राज्यसम्पदित्यर्थः, तं = सदाचारिणं नृपतिम्, अभिवर्षति = पूरयति सेवत इति यावत् ॥ ३०-३१ ॥

विलास—पुत्र ! बुद्धिमान् राजा प्रथम स्वस्तिपाठ तथा देवता और ब्राह्मणों का पूजन कर शीघ्र उन्नत होता है और सम्पत्ति पूर्व दिशा को सूर्य के समान राजा पर बरस पड़ती है ॥ ३०-३१ ॥

**निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च ।**
**अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ।**
**पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ॥ ३२ ॥**

**अन्वयः**—( अहं ) पश्यामि-निदर्शनानि उपायान् च बहूनि उद्धर्षणानि (वचांसि) च ( त्वम् ) अनुदर्शितरूपः असि, पौरुषं कुरु; इह ( त्वम् ) अभिप्रेतं पुरुषार्थं समाहर्तुम् अर्हसि ।

**अर्थः**—निदर्शनानीति । अहं, पश्यामि = मन्ये, निदर्शनानि = उदाहरणानि, उपायान् च = युक्तीरपि, बहूनि = भूयांसि, उद्धर्षणानि = प्रोत्साहकानि, वचांसि = वचनानि च, त्वम्, अनुदर्शितरूपः अनुदर्शितं = प्रदर्शितं, रूपं = लोकवृत्तान्तो यस्मै स तादृशः, असि = वर्तसे, पौरुषं = शौर्यं युद्धमित्यर्थः, कुरु = कुरुष्व; इह = संसारे, त्वं = भवान्, अभिप्रेतं = संमतं, पुरुषार्थं = पौरुषं, समाहर्तुं = कर्तुम्, अर्हसि ॥ ३२ ॥

विलास—मैं समझती हूं कि मैंने अनेक उदाहरण, उपाय और उत्साहजनक वाक्य लोकवृत्तान्त के साथ तुमको दिखा दिये, अब तुम पुरुषार्थ करो । इस संसार में तुमको सत्संमत पराक्रम कर दिखाना उचित है ॥ ३२ ॥

**क्रुद्धान् लुब्धान् परिक्षीणानवलिप्तान् विमानितान् ।**
**स्पर्द्धिनश्चैव ये केचित्तान् युक्त उपधारय ॥ ३३ ॥**

**अन्वयः**—युक्तः (त्वं) क्रुद्धान् लुब्धान् परिक्षीणान् अवलिप्तान् विमानितान् ये केचित् स्पर्धिनः च तान् एव ( राज्ञः ) उपधारय ।

अर्थः—क्रुद्धानिति। युक्तः = स्वकार्ये संलग्नः, त्वं, क्रुद्धान् = कुपितान्, लुब्धान् = लोलुपान्, 'लुब्धोऽभिलाषुकस्तृष्णुक्समौ लोलुपलोलुभौ' इत्यमरः, परिक्षीणान् = निर्धनान्, अवलिप्तान्=गर्वितान् 'गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः। दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मद' इत्यमरः, विमानितान्= अपमानितान्, अथ च, ये केचित् = ये केचन, स्पर्धिनः = स्वबलवन्तश्च, तान् एव = तानपि, अप्यर्थेऽत्र एवकारः, राज्ञः = नृपान्, उपधारय=समीपे स्थापय, सहायान् विधेहीत्यर्थः ॥ ३३ ॥

विलास— तुम अपने युद्ध के काम में लग कर क्रोधी, लोभी, दरिद्र, गर्वित, अपमानित तथा स्पर्धा करने वालों को अपने साथी बनाओ ॥ ३३ ॥

**एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान्।**
**महावेग इवोद्‌भूतो मातरिश्वा बलाहकान् ॥ ३४ ॥**

अन्वयः—त्वम् एतेन प्रकारेण महावेगः उद्‌भूतः मातरिश्वा बलाहकान् इव महतः गणान् भेत्स्यसे।

अर्थः—एतेनेति। त्वं = भवान्, एतेन=उक्तेन, प्रकारेण=विधिना, महावेगः = अतिवेगवान्, उद्‌भूतः = उत्पन्नः, मातरिश्वा = सदागतिः पवन इत्यर्थः, 'मातरिश्वा सदागति'रित्यमरः, बलाहकान् = मेघानिव 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहक' इति कोशः, महतः = विशालान्, गणान् = शत्रुसमूहान्, भेत्स्यसे = विदारयिष्यसि हनिष्यसीत्यर्थः ॥ ३४ ॥

विलास—बड़े वेग वाला, ऊपर उठा पवन जिस प्रकार मेघों को छिन्न भिन्न करता है, वैसे ही तुम इस प्रकार बड़े शत्रुगणों को भेद सकोगे ॥ ३४ ॥

**तेषामग्रप्रदायी स्याः कल्पोत्थायी प्रियंवदः।**
**ते त्वां प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ॥ ३५ ॥**

अन्वयः—कल्पोत्थायी (त्वं) तेषाम् अग्रप्रदायी प्रियंवदः स्याः, ते ध्रुवं प्रियं करिष्यन्ति, त्वां पुरः धास्यन्ति च।

अर्थः— तेषामिति। कल्पोत्थायी कल्पे = क्षये 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपी'त्यमरः, प्रतिष्ठतीति तच्छीलः, त्वं, तेषां = क्रुद्धादीनाम्, अग्रप्रदायी अग्रे = प्रथमं, भक्तं वेतनं पुरस्कारं च प्रददातीति तथाभूतः, 'कल्पोत्थायी, अग्रप्रदायी'त्युभयत्र आतो युक्, प्रियंवदः प्रियं = मिष्टं वदतीति प्रियंवदः 'प्रियवशे वदः खच्' इति खच्, खित्वान्मुमागमश्च, स्याः = भवेः, ते = पूर्वोक्ता दानमानादिसत्कृता राजानश्च, ध्रुवं = निश्चितं, प्रियं = समीहितं, करि-

ष्यन्ति = विधास्यन्ति, त्वां = भवन्तं पुनः, पुरः = अग्रे नेतृत्वस्थाने, धास्यन्तिः धारयिष्यन्ति, स्वयं चानुगामिनो भविष्यन्ति, प्रथमं वेतनाद्यदाने सद्यः कुपिता सन्तस्त्यजेयुरेव ॥ ३५ ॥

विलास—हानि सह कर फिर युद्ध के लिये उठने वाले तुम उन क्रुद्धादिकों व वेतन पुरस्कार आदि प्रथम देकर उनसे प्यारी २ बातें करते रहो, इससे वे तुम्हारा प्रिय निश्चित करेंगे तथा तुम्हींको नेता बना कर रहेंगे ॥ ३५ ॥

यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥ ३६ ॥

**अन्वयः**—शत्रुः यदा एव सपत्नं त्यक्तजीवितं जानीयात् , तदा एव वेश्म गतात् सर्पात् इव अस्मात् उद्विजते ।

**अर्थः**—यदेति । शत्रुः = अमित्रः, यदा एव = यस्मिन्नेव समये, सपत्नं = रिपुं 'रिपौ वैरिसपत्नारी'त्यमरः, त्यक्तजीवितं त्यक्तं='कार्यं वा साधयिष्यामि देहं वा पातयिष्यामी'ति बुद्ध्या युधि मुक्तं, निराकांक्षमित्यर्थः, जीवितं = जीवनं येन तं तथाभूतं, जानीयात् = विद्यात् , तदा एव = तस्मिन्नेव समये, वेश्मगतात् वेश्मनि = गृहे, गतः = प्रविष्टः स्थितो वा तस्मात् 'गृहं गेहोदवसितं वेश्म सद्म निकेतन'मित्यमरः, सर्पात् इव=भुजगादिव 'सर्पः पृदाकुर्भुजग' इत्यमरः, अस्मात् सहायवतो राज्ञः, उद्विजते = व्याकुलः सन् बिभेति ॥ ३६ ॥

विलास—वैरी राजा अपने वैरी को जिस समय हथेली पर जान लिये हुए समझेगा तभी घर में पैठ सांप की भांति उससे डरने लगेगा ॥ ३६ ॥

तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥ ३७ ॥

**अन्वयः**—तं पराक्रान्तं विदित्वा वशे यदि न कुरुते, निर्वादैः एनं निर्वदेत् , अन्ततः तत् भविष्यति ।

**अर्थः**—तमिति । तं = शत्रुं, पराक्रान्तं = पराक्रमवन्तं, विदित्वा = ज्ञात्वा वशे = स्वाज्ञायां, यदि = चेत् , न कुरुते = न करोति, निर्वादैः = परिनिष्ठितैर्दूतैः 'निर्वादः स्यात् परीवादे परिनिष्ठितवादयो'रिति विश्वः, एनं = शत्रुभूतं राजानं निर्वदेत् = परिनिष्ठां प्रापयेत् साम्ना दानेन वा तं पर्यवस्थापयेत् , अन्ततः = अन्ते फलतः, तत = वशीकरणादिकं स्वाभीष्टं, भविष्यति ॥ ३७ ॥

विलास—शत्रु को पराक्रमी जान यदि वश में नहीं कर पावे तो चतुर दूतों द्वारा उसको साम या दान से मिला ले, अन्त में वह हो जायगा ॥ ३७ ॥

**निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।**
**धनवन्तं हि मित्राणि भजन्ते चाऽऽश्रयन्ति च ॥ ३८ ॥**

**अन्वयः**—निर्वादात् आस्पदं लब्ध्वा धनवृद्धिः भविष्यति, हि मित्राणि धनवन्तं भजन्ते आश्रयन्ति च ।

**अर्थः**—निर्वादादिति। निर्वादात् = परिनिष्ठितत्वेन, आस्पदं=प्रतिष्ठां स्थानमित्यर्थः 'आस्पदं प्रतिष्ठाया'मिति निपातनात्साधु, लब्ध्वा=अवाप्य, धनवृद्धिः= श्रीसमृद्धिः, भविष्यति, हि = तेन, मित्राणि = सुहृदः 'अथ मित्रं सखा सुहृ'दित्यमरः, धनवन्तं = धनिनं, भजन्ते = सेवन्ते, आश्रयन्ति च = आश्रयं कुर्वन्ति च ।

विलास—चातुर्य से स्थान पाकर धन की वृद्धि होगी, इससे मित्र धनी की सेवा करते हैं और उनके आश्रित हो जाते हैं ॥ ३८ ॥

**स्खलितार्थं पुनस्तानि सन्त्यजन्ति च बान्धवाः ।**
**अप्यस्मिन्नाश्वसन्ते च जुगुप्सन्ते च तादृशम् ॥ ३९ ॥**

**अन्वयः**—तानि बान्धवाः च स्खलितार्थं पुनः सन्त्यजन्ति, अपि अस्मिन् आश्वसन्ते च ? तादृशं च जुगुप्सन्ते ।

**अर्थः**— स्खलितार्थमिति । तानि=मित्राणि, बान्धवाः=बन्धवश्च, स्खलितार्थं पुनः = क्षीणधनं तु, सन्त्यजन्ति = जहति, अपि = किम् ?, अस्मिन्=स्खलितार्थे, आश्वसन्ते च = विश्वासं कुर्वन्त्यपि, नैवेत्यर्थः, श्वसेरात्मनेपदमार्षम् , तादृशं च = तथाभूतं च, जुगुप्सन्ते = निन्दन्ति च ॥ ३९ ॥

विलास—मित्र और बान्धव धन-हीन होने पर तो उसको त्याग देते हैं, क्या उसपर विश्वास करते हैं ? नहीं, वैसे राजा की तो निन्दा करने लग जाते हैं ॥३९॥

**शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति ।**
**अतः सम्भाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ॥ ४० ॥**

**इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने तृतीयोऽध्यायः ।**

---

**अन्वयः**—यः शत्रुं सहायं कृत्वा विश्वासम् उपगच्छति, अतः एतत् सम्भाव्यम् एव, यत् राज्यं प्राप्नुयात् इति ।

**अर्थः**—शत्रुमिति । यः = पुरुषः, शत्रुं = वैरिणं, सहायं = साहाय्यकं, कृत्वा = विधाय, विश्वासं = विश्रम्भं 'समौ विश्रम्भविश्वासा'वित्यमरः, उपगच्छति=प्राप्नोति, अतः = अस्मात् कारणात्, एतत् = वक्ष्यमाणं, सम्भाव्यम्

एव = उपहासोक्तिरियम् असम्भावितमेवेदमिति तात्पर्यम् , यत्=यतः, राज्यं = राष्ट्रं, प्राप्नुयात् = लभेत, इति ॥ ४० ॥

इति श्रीहोशिङ्गजगन्नाथशास्त्रिनिर्मिते लीलाख्ये विदुलोपाख्यानव्याख्याने तृतीयोऽध्यायः समाप्तः ।

विलास—जो पुरुष शत्रु को सहायक बना कर उसपर विश्वास करता है, वह फि राज्य पा जाय-यह तो असम्भवनीय ही है ॥ ४० ॥

इति विदुलोपाख्यान के 'विलास' नामक हिन्दीभाषानुवाद का तीसरा अध्याय समाप्त ।

## चतुर्थोऽध्यायः ।

**मातोवाच—**

**नैव राज्ञा दरः कार्यो जातु कस्याञ्चिदापदि ।**
**अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ १ ॥**

माता = विदुला, उवाच = अब्रवीत् ।

**अन्वयः**—राज्ञा कस्याञ्चित् आपदि जातु दरः न एव कार्यः, अथ दीर्ण अपि स्यात् चेत् दीर्णवत् न एव वर्तेत ।

**अर्थः**—नेति । राज्ञा = पार्थिवेन, कस्याञ्चित्=कस्याञ्चन, आपदि = विपत्ति 'विपत्त्यां विपदापदा'विति कोशः, जातु = कदाचित् , दरः = भीतिः 'चतुर्दः दरस्त्रासो भीतिर्भीः साध्वसं भय'मित्यमरः, न एव कार्यः = नैव कर्तव्यः, अथ अथवा, दीर्णः = भीतोऽपि, स्यात् चेत् = भवेद्यदि, तत् , दीर्णवत्=भयभीत इव न वर्तेत = नाचरेत् ॥ १ ॥

मा विदुला कहने लगी—

विलास—किसी विपद् में भी कभी राजा को भय न मानना चाहिये, यदि डर जाय तो भीत-सा आचरण न करे ॥ १ ॥

**दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।**
**राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतीः ॥ २ ॥**

**अन्वयः**—हि राजानं दीर्णं दृष्ट्वा राष्ट्रं बलम् अमात्याः च सर्वम् एव अनु दीर्यते, ते पृथक् मतीः कुर्वन्ति ।

**अर्थः**—दीर्णमिति । हि = यस्माद्धेतोः 'हि हेतावधारणे' इति कोश राजानं = नरेन्द्रं, दीर्णं=भयग्रस्तं, दृष्ट्वा = विलोक्य, राष्ट्रं = राज्यान्तःपातिजः

समूहः, बलं = सैन्यम्, अमात्याः = मन्त्रिणश्च, सर्वम् एव = तदिदं सकलमेव, अनुदीर्यते=भीतं भवति, ते = मन्त्रिप्रभृतयश्च, पृथक्=परस्परभिन्नाः स्वानुकूलतया दृश्यमानाः, मतीः = बुद्धीः विचारानित्यर्थः, कुर्वन्ति ॥ २ ॥

विलास—क्योंकि राजा को डरा देख कर मन्त्री, सेना तथा राज्य के लोग भयभीत हो अपना २ पृथक् विचार करने लगते हैं ॥ २ ॥

**शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।**
**अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ३ ॥**

**अन्वयः**—एके शत्रून् प्रपद्यन्ते, अपरे पुनः प्रजहति, अन्ये तु ये पुरस्तात् विमानिताः (ते) प्रजिहीर्षन्ति ।

**अर्थः**—शत्रूनिति । एके = केचन राजानः, शत्रून् = रिपून्, प्रपद्यन्ते = आश्रयन्ति, अपरे पुनः = अन्ये तु, प्रजहति = त्यजन्ति, अन्ये तु = तद्भिन्नाश्च, ये, पुरस्तात् = पूर्वकाले, विमानिताः = अपमानिताः, ते, प्रजिहीर्षन्ति = प्रहर्तुमिच्छन्ति ॥ ३ ॥

विलास—कुछ लोग शत्रु का आश्रय लेते हैं, कुछ तो केवल छोड़ देते हैं, बाकी के लोग, जो पहिले अपमानित हुए हैं-प्रहार करना चाहते हैं ॥ ३ ॥

**य एवात्यन्तसुहृदस्त एनं पर्युपासते ।**
**अशक्तयः स्वस्तिकामा बद्धवत्सा इला इव ॥ ४ ॥**

**अन्वयः**—ये एव अत्यन्तसुहृदः, ते एनं बद्धवत्सा इलाः इव अशक्तयः स्वस्तिकामाः ( सन्तः ) पर्युपासते ।

**अर्थः**—य इति । ये एव = राजानः, अत्यन्तसुहृदः = चिरमित्राणि, ते = सखायः, एनं = नृपं, बद्धवत्साः बद्धाः = प्रतिबद्धाः, वत्साः = सन्तानानि यासां ताः, इलाः इव=धेनव इव "इला धेनुः सहवत्सा न आगात्" इति मन्त्रवर्णात्, अशक्तयः = असमर्थाः, स्वस्तिकामाः = कल्याणेच्छवः सन्तः, पर्युपासते=सेवन्ते समाश्रयन्ति च ॥ ४ ॥

विलास—जो घने मित्र हैं, वे बंधे बछड़े वाली धेनुओं की तरह शक्तिहीन, मङ्गल की कामना करते हुए उसीके आश्रित बने रहते हैं ॥ ४ ॥

**शोचन्तमनुशोचन्ति पतितानिव बान्धवान् ।**
**अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ॥ ५ ॥**

**अन्वयः**—पूर्वं ते पूजिताः अपि, सुहृदः मताः अपि ते पतितान् बन्धवान् इव शोचन्तम् अनुशोचन्ति ।

**अर्थः**—शोचन्तमिति । पूर्वं=पुरा समृद्धिकाले, ते=तुभ्यं त्वयेत्यर्थः, तृतीयार्थे चतुर्थी, पूजिताः=सत्कृताः अपि, सुहृदः=सखायः, मताः अपि=स्वीकृत्य मानिता अपि, ते=राजानः, पतितान्=असहायावस्थास्थितान्, बान्धवान् इव=बन्धूनिव, शोचन्तं=शोकं कुर्वन्तं राजानम्, अनुशोचन्ति=दुःखं प्रदर्शयन्ति ॥ ५ ॥

विलास—पूर्व में तुमसे पूजित भी, मित्र माने गये भी वे असहाय बन्धुओं के समान दुखी के साथ शोक करते रहते हैं ॥ ५ ॥

**ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।**
**मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥ ६ ॥**

**अन्वयः**—ये व्यसनम् ईयुषः राज्ञः राष्ट्रम् अभिमन्यन्ते, त्वं ( तान् ) मा दीदरः, सुहृदः दीर्णं त्वां मा प्रहासिषुः ।

**अर्थः**—य इति । ये=सुहृदः, व्यसनं=विपदम्, ईयुषः=प्राप्तस्य, राज्ञः=नृपतेः, राष्ट्रं=मण्डलाधिरत्यम्, अभिमन्यन्ते='अस्मदीयमिदं राज्यं, रक्षणीयं; राजा च व्यसनादुद्धर्तव्य' इति रूपेणाऽभिमानं दधते, त्व=भवान्, तान्=सुहृदः, मा दीदरः=न विदारय, यतः, सुहृदः=सखायः, दीर्णं=भीतं, त्वां=भवन्तं, मा प्रहासिषुः=नात्याक्षिषुः, उभयत्र माङो योगेनाडागमनिषेधः ॥ ६ ॥

विलास—विपद में पड़े राजा के राष्ट्र को जो अपना अर्थात् रक्षणीय मानते हैं, उन्हें न सताओ जिससे कि वे मित्र बने रह कर भय-भीत तुम्हें न छोड़ दे ॥ ६ ॥

**प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।**
**विदधत्या समाश्वासमुक्तं तेजोविवृद्धये ॥ ७ ॥**

**अन्वयः**—तव प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या समाश्वासं विदधत्या मया तेजोविवृद्धये उक्तम् ।

**अर्थः**—प्रभावमिति । तव=ते, प्रभावं=प्रतापं 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः, पौरुषं=सामर्थ्यं, बुद्धिं=मतिं चातुर्यमित्यर्थः, जिज्ञासन्त्या=ज्ञातुमिच्छन्त्या, समाश्वासं=धैर्यं, विदधत्या=कुर्वत्या, मया, तेजोविवृद्धये तेजसः=ओजसः, विवृद्धिः=समृद्धिः तस्यै, उक्तं=कथितम् ॥ ७ ॥

विलास—तुम्हारे तेज, बल तथा चातुर्य्य को जानने की इच्छा से धैर्य देते हुए मैंने तेजोबल की वृद्धि के लिये कहा ॥ ७ ॥

यदेतत् संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वाऽसौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ॥ ८ ॥

**अन्वयः**—सञ्जय ! अहं सम्यक् ब्रवीमि यदि, यत् एतत् संविजानासि, ( तर्हि ) आत्मानम् असौम्यम् इव कृत्वा जयाय उत्तिष्ठ ।

**अर्थः**—यदिति । सञ्जय = पुत्र ! अहं = त्वन्माता, सम्यक् = साधु हितं च, ब्रवीमि = कथयामि, यदि=चेत् , यत् = यतः, एतत्=मदुक्तं, संविजानासि= प्रत्येषि, तर्हि, आत्मानं = स्वम् , असौम्यम् = असाधारणमिव, कृत्वा = विधाय, जयाय = जयं कर्तुम् , उत्तिष्ठ = सज्जो भव ॥ ८ ॥

विलास—सञ्जय ! मैं ठीक कहती हूं ऐसा यदि तुम मानते हो तो अपनेको कठोर-सा बनाकर शत्रु पर विजय पाने के लिए उठ खड़े हो जाओ ॥ ८ ॥

अस्ति नः कोशनिचयो महान् ह्यविदितस्तव ।
तमहं वेद नान्यस्तमुपसम्पादयामि ते ॥ ९ ॥

**अन्वयः**—तव अविदितः महान् नः कोशनिचयः अस्ति, अहं तं वेद, अन्यः न, तं ते उपसम्पादयामि ।

**अर्थः**—अस्तीति । तव = ते, अविदितः = अज्ञातः, महान् = विशालः 'विशालं पृथुलं मह'दित्यमरः, नः=अस्माकं, कोशनिचयः कोशस्य = अर्थौघस्य 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययो'रित्यमरः निचयः = राशिः, अस्ति=वर्तते, अहं, तं=कोशनिचयं, वेद=जानामि, अन्यः=इतरः मद्भिन्न इत्यर्थः, न=न वेद, तं=कोशनिचयं, ते=तुभ्यम् , उपसम्पादयामि = युद्धादि-कार्यसिद्ध्यर्थं प्रापयिष्यामि ॥ ९ ॥

बिलास—तुमको अज्ञात ऐसा एक बड़ा हम लोगों का खजाने का ढेर है, उसे मैं जानती हूं दूसरा नहीं, उसीको तुम्हारे वास्ते ला दूंगी ॥ ९ ॥

सन्ति नैकतमा भूयः सुहृदस्तव सञ्जय ।
सुखदुःखसहा वीर सङ्ग्रामादनिवर्तिनः ॥ १० ॥

**अन्वयः**—वीर सञ्जय ! भूयः सुखदुःखसहाः सङ्ग्रामात् अनिवर्तिनः नैकतमाः तव सुहृदः सन्ति ।

**अर्थः**—सन्तीति । वीर=सञ्जय !, भूयः=पुनश्च, सुखदुःखसहाः सुखं च=शर्म च, दुःखं च-विपच्च ते सहन्ते=मर्षन्ति तादृशाः, सङ्ग्रामात्=आहवात्

'सङ्ग्रामाभ्यागमाहवा' इत्यमरः, अनिवर्तिनः=अपरावर्तनशीलाः, नैकतमाः= अनेके, तव = ते, सुहृदः =सखायः, सन्ति ॥ ११ ॥

विलास—वीर सञ्जय ! और सुख-दुःख सहने वाले, समराङ्गण से न लौटने वाले अनेक तुम्हारे मित्र भी हैं ॥ १० ॥

ताद्दशा हि सहाया वै पुरुषस्य बुभूषतः ।
इष्टं जिहीर्षतः किञ्चित् सचिवाः शत्रुकर्शन ॥ ११ ॥

**अन्वयः**—शत्रुकर्शन ! किञ्चित् इष्टं जिहीर्षतः बुभूषतः पुरुषस्य ताद्दशाः सहायाः सचिवाः भवन्ति हि ।

**अर्थः**—ताद्दशा इति । शत्रुकर्शन शत्रून्=रिपून् कर्शयतीति तत्सम्बुद्धौ, किञ्चित्=स्वल्पमपि, इष्टं = समीहितं राज्यादि, जिहीर्षतः =हर्तुमिच्छतः, बुभूषतः=उन्नतिं कामयमानस्य, पुरुषस्य=पुंसः, ताद्दशाः=पूर्वोक्ताः सुहृदः, सहायाः= साहाय्यकर्तारः, सचिवाः =मन्त्रपराश्च, भवन्ति, हि=निश्चयेन ॥ ११ ॥

विलास—हे रिपुदमन ! थोड़े भी राज्य को छीन कर वापस लेना चाहने वाले, होनहार पुरुष के वैसे लोग सहायक तथा सलाहगार हो जाते हैं ॥ ११ ॥

यस्यास्त्वीद्दशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः ।
तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम् ॥ १२ ॥

**अन्वयः**—सुचित्रार्थपदाक्षरं यस्या ईद्दशकं वाक्यं श्रुत्वा अपि स्वल्पचेतसः तस्य तमः तु अपागमत् ।

**अर्थः**—यस्या इति । सुचित्रार्थपदाक्षरं सुतरां=नितान्तं, चित्राः =अद्भुताः, अर्थाः=अभिधेयानि 'अर्थोऽभिधेयरैवस्तु' इति कोशः, येषु एवम्भूतानि पदानि= सुप्तिङन्तानि, अक्षराणि=वर्णाश्च यस्मिन् तत् , यस्याः =विदुलायाः, ईद्दशकं= प्रोत्साहकं, वाक्यं=वचनकदम्बं, श्रुत्वा अपि=आकर्ण्यैव, स्वल्पचेतसः=मन्दप्रज्ञस्य भीरोः, तस्य = सञ्जयस्य, तमः तु=भयोत्पन्नमज्ञानरूपं तिमिरं च 'तमिस्रं तिमिरं तम' इत्यमरः, अपागमत्=अनश्यत् , मातुर्वचनेन भयादिकारणकलापलोपादयं युद्धाय कृतमतिरभूदिति तात्पर्यम् ॥ १२ ॥

विलास—विचित्र अर्थों से भरे उसके ऐसे वचन सुन कर ही भयभीत, मन्दमति उस सञ्जय का मोह-रूपी अन्धकार दूर हुआ अर्थात् सब कर्तव्य समझ में आगया १२

पुत्र उवाच—

उदके भूरियं धार्या मर्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥ १२ ॥

पुत्रः=सञ्जयः, उवाच=कथयति स्म ।

**अन्वयः**—भविष्यद्भूतिदर्शिनी भवती यस्य मे नेत्री अस्ति ( तेन ) मया उदके ( मज्जन्तीव ) इयं भूः धार्या, प्रवणे वा मर्तव्यम् ।

**अर्थः**—उदक इति । भविष्यद्भूतिदर्शिनी भविष्यन्ती=आगामिनी चासौ भूतिः=ऐश्वर्यं, तां दर्शयतीति तथाभूता, भवती=त्वं, यस्य मे=यस्य मम, नेत्री=शिक्षयित्री, अस्ति, तेन मया, उदके=पयसि 'पयः कीलालममृतं जीवनं भुवनं वनम् । कबन्धमुदकं पाथ' इत्यमरः, मज्जन्तीव=ब्रुडन्तीव, इयम्=एषा, भूः=भूमिः पित्र्यं राज्यमित्यर्थः, धार्या=उद्धर्तव्या, प्रवणे=युद्धाख्ये प्रपाते वा, मर्तव्यं=मरणीयम्, नैव निर्व्यापारेण स्थातव्यमिति फलितोऽर्थः ॥ १३ ॥

**पुत्र संजय ने कहा—**

विलास—**भविष्यत् का कल्याण सोचने वाली आप मेरी गुरु तथा पथ-प्रदर्शक हैं, तब मैं जल में डूबती पृथ्वी के समान डूबने वाले अपने राज्य का उद्धार करूंगा अथवा युद्धरूपी प्रपात में मर मिटूंगा ॥ १३ ॥**

अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किञ्चित् किञ्चित् प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥ १४ ॥

**अन्वयः**—अहं हि अपरापरं वचनं त्वत्तः शुश्रूषुः सन् किञ्चित् किञ्चित् प्रतिवदन् मुहुर्मुहुः तूष्णीम् आसम् ।

**अर्थः**—अहमिति । अहं हि=अहं तु, अपरापरम्=अपरमपरम् उत्तरोत्तरमित्यर्थः, वचनं=धर्मोपदेशरूपं वाक्यं, त्वत्तः=त्वत्सकाशात्, शुश्रूषुः=श्रोतुमिच्छुः सन्, किञ्चित् किञ्चित्=अतिस्वल्पं, प्रतिवदन्='पुत्रे निःस्नेहासि, आयसं तव हृदय'मित्यादि प्रतिकूलं वदन्, मुहुर्मुहुः=पुनः पुनः 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समा' इत्यमरः, तूष्णीम् आसम्=जोषमासं, मौनमेव धृत्वा स्थितोऽभूवम् ॥ १४ ॥

विलास—**मैं तो उत्तरोत्तर तुम्हारे वचनों को सुनना चाहता था, अतः बीच में कुछ २ प्रतिवाद कर बार बार चुप हो जाता था ॥ १४ ॥**

**अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात्।**
**उद्यच्छाम्येष शत्रूणां नियमार्थं जयाय च ॥ १५ ॥**

**अन्वयः**—बान्धवात् कृच्छ्रात् लब्धस्य अमृतस्य इव (वचसः) अतृप्यन् एषः (अहं) शत्रूणां नियमार्थे जयाय च उद्यच्छामि।

**अर्थः**—अतृप्यन्निति। बान्धवात्=बन्धुतः, कृच्छ्रात्=कष्टात्, लब्धस्य=प्राप्तस्य, अमृतस्य इव=पीयूषस्येव 'पीयूषममृतं सुधे'त्यमरः, वचसः, अतृप्यन्=असन्तुष्यन्, एषः=सः, अहं, शत्रूणां=वैरिणां, नियमार्थे=निग्रहार्थे, जयाय=विजयाय च, उद्यच्छामि=उद्यमं करोमि ॥ १५ ॥

विलास—आत्मीय जन से कठिनाई से प्राप्त अमृत के समान वचन से तृप्त (अघाते) न होने वाला मैं अब शत्रुओं को बन्धन करने या जीतने का उद्योग शीघ्र ही करता हूं ॥ १५ ॥

**कुन्त्युवाच—**

**सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः।**
**तच्चकार तथा सर्वं यथावदनुशासनम् ॥ १६ ॥**

कुन्ती=पाण्डवमाता, उवाच=कृष्णमब्रवीत्।

**अन्वयः**—वाक्यसायकैः प्रणुन्नः क्षिप्तः सदश्वः इव सः यथावत् तत् सर्वम् अनुशासनं तथा चकार।

**अर्थः**—विदुलासञ्जयसंवादमुपसंहरन्ती कुन्ती प्राह-सदश्व इति। वाक्यसायकैः वाक्यानि सायका इवेति वाक्यसायकाः तैः वाक्यानि=वचनानि, सायका इव=बाणा इव इति तैः, प्रणुन्नः=प्रचोदितः, क्षिप्तः=प्राप्तकशाघातस्पर्शः, सदश्व इव=उत्तमतुरङ्गम इव 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमा' इत्यमरः, सः=सञ्जयः, यथावत्=सम्यक्, तत्=मात्रुक्तं, सर्वं=सकलम्, अनुशासनम्=आदेशं, तथा=तेनैव प्रकारेण, चकार=अकरोत् ॥ १६ ॥

पाण्डवों की माता कुन्ती कृष्ण से कहती है—

विलास—वाग्बाणों से प्रेरित, उत्तम वाजि के समान, उस संजय ने सभी उसके अनुशासनों को ठीक २ तौर पर किया ॥ १६ ॥

**इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम्।**
**राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥ १७ ॥**

**अन्वयः**—मन्त्री सीदन्तं शत्रुपीडितं राजानं भीमम् उद्धर्षणम् उत्तमं तेजोवर्धनम् इदं श्रावयेत् ।

**अर्थः**—एतदाकर्णनफलं प्रदर्शयति–इदमिति । मन्त्री = अमात्यः 'मन्त्री धीसचिवोऽमात्य' इत्यमरः, सीदन्तं = दुःखिनं, शत्रुपीडितं शत्रुभिः = रिपुभिः, पीडितः = क्लेशितः तं, राजानं = क्ष्माभृतं 'राजा राट् पार्थिवक्ष्माभृ'दित्यमरः, भीमम् = अत्यन्तम्, उद्धर्षणम् = उत्साहकरम्, उत्तमं = श्रेष्ठं, तेजोवर्धनं=प्रतापोत्पादकम्, इदम् = आख्यानकम्, श्रावयेत् = निशमयेत् ॥ १७ ॥

विलास—मंत्री शत्रु से सताये दुखी राजा को अत्यन्त उत्साहवर्धक, श्रेष्ठ, तेजोवर्धक यह आख्यान सुनावे ॥ १७ ॥

**जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।**
**महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति ॥ १८ ॥**

**अन्वयः**—विजिगीषुणा ( नृपेण ) जयः नाम अयम् इतिहासः श्रोतव्यः, श्रुत्वा क्षिप्रं महीं विजयते, शत्रून् च मर्दति ।

**अर्थः**—जय इति । विजिगीषुणा = जयेच्छुना, नृपेण = राज्ञा, जयः नाम= जयाख्यः, अयम् = एषः, इतिहासः = पुरावृत्तम् 'इतिहासः पुरावृत्त'मित्यमरः, श्रोतव्यः = आकर्णनीयः, श्रुत्वा = नृपतिरिममाकर्ण्य, क्षिप्रं = द्रुतं 'लघु क्षिप्रमरं द्रुत'मित्यमरः, महीं = मेदिनीं 'क्ष्माऽवनिर्मेदिनी मही'ति कोशः, विजयते = जयति 'विपराभ्यां जे'रित्यात्मनेपदम्, शत्रून् = वैरिणश्च, मर्दति=नाशयति॥१८॥

विलास—जयाभिलाषी राजा 'जय' नामक इस इतिहास को अवश्य सुने, सुन कर शीघ्र पृथ्वी विजय करता है और शत्रुओं का मर्दन करता है ॥ १८ ॥

**इदं पुंसवनं चैव वीराजननमेव च ।**
**अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥ १९ ॥**

**अन्वयः**—गर्भिणी पुंसवनं चैव वीराजननम् एव च इदम् अभीक्ष्णं श्रुत्वा ध्रुवं वीरं प्रजायते ।

**अर्थः**—इदमिति । गर्भिणी = गर्भवती स्त्री, पुंसवनं पुमान् सूयतेऽनेनेति पुंसवनं = पुत्रप्रसवकरं चैव, वीराजननं वीराणां = शूराणाम्, आ = आसमन्तात्, जननं = जनुर्येन 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमरः, तत्

एव च=अपि च, इदम्=आख्यानकम्, अभीक्ष्णम्=असकृत वारंवारमित्यर्थः, 'अभीक्ष्णमसकृत्समा' इत्यमरः, श्रुत्वा = निशम्य, ध्रुवं=निश्चितं, वीरं=शूरं पुत्रं, प्रजायते=जनयति ॥ १९ ॥

विलास—गर्भवती स्त्री पुत्रदायक तथा वीरोत्पादक इस आख्यान को सुन कर निश्चय ही वीर पुत्र को जन्म देती है ॥ १९ ॥

विद्याशूरं तपःशूरं दानशूरं तपस्विनम् ।
ब्राह्मया श्रिया दीप्यमानं साधुवादे च संमतम् ॥ २० ॥
अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ २१ ॥
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
ईदृशं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने चतुर्थोऽध्यायः ।



**अन्वयः**—क्षत्रिया विद्याशूरं तपःशूरं, दानशूरं, तपस्विनं, ब्राह्मया श्रिया दीप्यमानं, साधुवादे च संमतम्, अर्चिष्मन्तं, बलोपेतं, महाभागं, महारथं, धृतिमन्तम्, अनाधृष्यं, जेतारम्, अपराजितम्, असाधूनां नियन्तारं, धर्मचारिणां गोप्तारं, सत्यपराक्रमम् ईदृशं वीरं ( पुत्रं ) सूते ।

**अर्थः**—एतच्छ्रवणपरा क्षत्रिया कीदृशं पुत्रं जनयतीति त्रिभिः पद्यैर्दर्शयति-विद्याशूरमित्यादि । क्षत्रिया=क्षत्रियस्त्री राज्ञी, विद्याशूरं विद्यायां=ज्ञानसम्पादनोपयोगे, शूरः=वीरः तं विद्वच्छ्रेष्ठं, तपःशूरं=तपोनिष्ठं, दानशूरं=महादानिनं, तपस्विनं = तपश्चरणशीलम् 'अस्मायामेधास्रजो विनि'रिति विनिः, ब्राह्मया = ब्रह्मदेवताकया, श्रिया = शोभया ब्रह्मनिष्ठसत्त्वगुणप्रधानतेजसेत्यर्थः, दीप्यमानं = शोभमानं, साधुवादे साधूनां = सतां, वादः = चर्चा अथवा साधुरयं=सज्जनोऽयमिति यो वादः=कथनं तत्र च, संमतं=माननीयम्, अर्चिष्मन्तं=प्रभावोत्पादकं, बलोपेतं=शक्तिमन्तं, महाभागं = भाग्यशालिनं, महारथं=रथिनं, धृतिमन्तं=धैर्यसम्पन्नम्, अनाधृष्यं = शत्रुभिराक्रमितुं तिरस्कर्तुं चाशक्यं, जेतारं=जयशालिनम्, अपराजितम् = अपराभूतम्, असाधूनां = दुर्जनानां, नियन्तारं=निग्रहीतारं, धर्मचारिणां=सद्धर्मशालिनां, गोप्तारं=रक्षकं, सत्यपराक्रमं सत्यः=स्पष्टः निश्चितश्च,

प्रकाशित है। .. शीघ्रता कर !! प्रकाशित हो गया !!!

काशी-बिहार-पंजाब-मध्यप्रान्त-बृहत् राजस्थानसंघ-विन्ध्यप्रदेश आदि संस्कृत की परीक्षा एवं जूनियर हाई स्कूल के लिए उपयुक्त-

# राष्ट्रभाषा सरल हिन्दी व्याकरण

यों तो हिन्दीमें अनेकों व्याकरण प्रकाशित हो चुके हैं किन्तु, स्वतंत्र भारतमें संस्कृतग्रन्थागार—'चौखम्बा संस्कृत पुस्तकालय' से प्रकाशित, इस राष्ट्रभाषा सरल हिन्दी व्याकरण को कोई भी नहीं पाता। इसमें सूक्ष्मसे सूक्ष्म बातोंका तथा स्थूलसे स्थूल बातोंका विचार किया गया है जैसे-'जो कि' लिखना गलत है 'जो' लिखना शुद्ध है। किमधिकम्, हिन्दीके पत्रों—'भारत' 'संसार' 'आज' तथा श्रीयुक्त सम्पूर्णानन्दजी ( शिक्षा-सचिव ) बाबूराव विष्णुपराडकर, आदि धुरन्धर हिन्दी वेत्ताओंके मतोंसे अलंकृत एवं नागरी प्रचारिणी सभा के सभापति श्रीयुक्त पं० रामनारायण मिश्र एवं हिन्दू विश्वविद्यालयके प्रोफेसर पं० विश्वनाथप्रसाद मिश्र एम्० ए० की सम्मतियोंसे सुसज्जित यह व्याकरण "गागरमें सागर" भरते हुएके समान है। इसे पढ़कर हिन्दी व्याकरणके नियमों को भलीभांति ज्ञातकर संस्कृत व्याकरणका भी ज्ञान इसीसे अच्छी प्रकार प्राप्त कर सकते हैं। यह सुविधा किसी हिन्दी व्याकरणमें नहीं है। १।)

# प्रबन्ध-पारिजात

लेखकः—पं० रामचन्द्र मिश्र प्रोफेसर धर्मसमाज सं० कालेज मुजफ्फरपुर।

इसमें परीक्षार्थी छात्रोंको संस्कृत प्रबन्ध रचना लिखने के नियम अत्यन्त सरल रूपमें समझाये गये हैं और तदनुसार परीक्षोपयोगी 'प्रबन्ध लेखनप्रकार' (परीक्षामें आने योग्य निबन्धो का उत्तर) इस तरह सरल और संक्षिप्त में लिखा गया है कि अभ्यास कर लेने पर भी विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर सकते हैं। इतना ही नहीं अन्तमें(१)'पत्र-लेखन प्रकार'(चिट्ठी-पत्री, आवेदन पत्र आदिका उल्लेख ) तथा प्रसंगोपयुक्त (२) 'सुभाषितगद्यावली' (३) 'सुभाषित-पद्यांशावली' और (४) 'लौकिक न्यायमाला' आदि विषयोंका समावेश करके आधुनिक चतुरस्र विद्वान् बननेका सुगम रास्ता दिखाया गया है। विश्वास है कि आजतक के प्रकाशित प्रबन्धोपयोगी ग्रन्थों में इस 'प्रबन्धपारिजात' के समान दूसरी कोई भी पुस्तक नहीं है। १।)

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।